॥ श्रीः ॥

ಸರ್ವ ಮೂಲ ಭಾಗ
೧.

श्रीमदानन्दतीर्थ (पूर्णप्रज्ञ) भगवत्पादाचार्य
विरचित श्री सर्वमूलांतर्गत

# गीता प्रस्थान ग्रंथौ.

१. गीताभाष्यम् (गीतामृतम्). (१-११४)
२. गीतातात्पर्यनिर्णयः. (११५-१६२)




ಶ್ರೀ ಬಸವರಾಜ ಪ್ರಿಂ. ಪ್ರೆಸ್, ಹಾವೇರಿ.

श्रीमदानन्दतीर्थ(पूर्णप्रज्ञ)भगवत्पादाचार्यविरचित

## श्रीसर्वमूलान्तर्गत

# गीताप्रस्थानग्रन्थौ



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# गीताभाष्यम्

(भगवद्गीतायुतम्)

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ देवं नारायणं नत्वा सर्वदोषविवर्जितम् ॥ परिपूर्णं गुरूंश्चान्गीतार्थं वक्ष्यामि लेशतः ॥ १ ॥ नष्टधर्मज्ञानलोककृपालुभिर्ब्रह्मरुद्रेन्द्रादिभिरर्थितो ज्ञानप्रदर्शनाय भगवान्व्यासोऽवततार । ततश्चेष्टानिष्टप्राप्तिपरिहारसाधनादर्शनाद्वेदार्थाज्ञानाच्च संसारे क्लिश्यमानानां वेदानधिकारिणां स्त्रीशूद्रादीनां च धर्मज्ञानद्वारा मोक्षो भवेदिति कृपालुः सर्ववेदाद्यर्थोपबृंहितां तदनुक्तकेवलेश्वरज्ञानदृष्टार्थयुक्तां च सर्वप्राणिनामवगाह्यानवगाह्यरूपां केवलभगवत्स्वरूपपरां परोक्षार्थां महाभारतसंहितामचीक्लृपत् । तच्चोक्तं । “लोकेशा ब्रह्मरुद्राद्याः संसारे

---

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ धृतराष्ट्र उवाच ॥ धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ॥ मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥ संजय उवाच ॥ दृष्ट्वा तु पांडवानीकं व्यूढं दुर्योधनस्तदा । आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥ पश्यैतां पांडुपुत्राणामाचार्य महतीं चमूं । व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥ अत्र शूरा महेष्वासा भीमार्जुनसमा युधि । युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥ धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् । पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥ युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् । सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥ अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।

क्लेशिनं जनम्। वेदार्थाज्ञमधीकारवर्जितं च स्त्रियादिकम्। अवेक्ष्य
प्रार्थयामासुर्देवेशं पुरुषोत्तमम्। ततः प्रसन्नो भगवान्व्यासो भूत्वा च
तेन च। अन्यावताररूपैश्च वेदानुक्तार्थभूषितम्। केवलेनात्मबोधेन
दृष्टं वेदार्थसंयुतम्। वेदादपि परं चक्रे पंचमं वेदमुत्तमम्॥ भारतं
पंचरात्रं च मूलरामायणं तथा। पुराणं भागवतं चेति संभिन्नः शास्त्र-
पुंगव" इति नारायणाष्टाक्षरकल्पे। "ब्रह्मापि तन्न जानाति ईषत्सर्वोपि

---

नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७॥ भवान्भीष्मश्च कर्णश्च
कृपश्च समितिञ्जयः। अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः। नानाशस्त्रप्रहरणाः सर्वे
युद्धविशारदाः ॥९॥ अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्। पर्याप्तं
त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥ अयनेषु च सर्वेषु यथाभाग-
मवस्थिताः। भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥ संजय
उवाच ॥ तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः। सिंहनादं विनद्योच्चैः
शंखं दध्मौ प्रतापवान् ॥१२॥ ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥ ततः श्वेतैर्हयैर्युक्ते
महति स्यन्दने स्थितौ। माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः
॥ १४ ॥ पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः। पौंड्रं दध्मौ महाशंखं
भीमकर्मा वृकोदरः ॥१५॥ अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥ काश्यश्च परमेष्वासः
शिखण्डी च महारथः। धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते। सौभद्रश्च महाबाहुः शंखान्दध्मुः
पृथक्पृथक् ॥ १८ ॥ स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥ अथ व्यवस्थितान्दृष्ट्वा
धार्तराष्ट्रान्कपिध्वजः। प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ॥ अर्जुन उवाच ॥ सेनयोरुभयो-
र्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥ यावदेतान्निरीक्षेऽहं योद्धुकामानव-





जानाति। बह्वर्थमृषयस्तत्तु भारतं प्रवदन्ति ही"त्युपनारदीये। "ब्रह्माद्यैः
प्रार्थितो विष्णुर्भारतं स चकार ह। यस्मिन्दशार्थाः सर्वत्र न ज्ञेयाः
सर्वजन्तुभिरि"ति नारदीये। "भारतं चापि कृतवान्पंचमं वेदमुत्त-
मम्। दशावरार्थं सर्वत्र केवलं विष्णुबोधकम्। परोक्षार्थं तु सर्वत्र
वेदादप्युत्तमं तु यदि"ति स्कान्दे। "यदि विद्याच्चतुर्वेदान्सांगोप-
निषदान्द्विजः। न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः। इतिहास-

---

स्थितान्। कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥ योत्स्यमानान-
वेक्षेऽहं य एतेऽत्र समागताः। धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः
॥ २३ ॥ संजय उवाच ॥ एवमुक्तो हृषीकेशो गुडाकेशेन भारत।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥ भीष्मद्रोणप्रमुखतः
सर्वेषां च महीक्षिताम्। उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥२५॥
तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान्। आचार्यान्मातुलान्भ्रातॄ-
न्पुत्रान्पौत्रान्सखींस्तथा ॥ २६ ॥ श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि।
तान्समीक्ष्य स कौंतेयः सर्वान्बन्धूनवस्थितान् ॥ २७ ॥ कृपया परया-
विष्टो विषीदन्निदमब्रवीत्। अर्जुन उवाच॥ दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं
समुपस्थितम् ॥ २८ ॥ सीदन्ति मम गात्राणि मुखं च परिशुष्यति।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥ गाण्डीवं स्रंसते हस्ता-
त्वक्चैव परिदह्यते। न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः॥ ३०॥
निमित्तानि च पश्यामि विपरीतानि केशव। न च श्रेयोऽनुपश्यामि
हत्वा स्वजनमाहवे ॥ ३१ ॥ न कांक्षे विजयं कृष्ण न च राज्यं सुखानि
च। किं नो राज्येन गोविंद किं भोगैर्जीवितेन वा ॥ ३२ ॥ येषामर्थे
कांक्षितं नो राज्यं भोगाः सुखानि च। त इमेऽवस्थिता युद्धे प्राणांस्त्य-
क्त्वा धनानि च ॥ ३३ ॥ आचार्याः पितरः पुत्रास्तथैव च पितामहाः।
मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥ ३४ ॥ एतान्न हंतु-
मिच्छामि घ्नतोऽपि मधुसूदन। अपि त्रैलोक्यराज्यस्य हेतोः किं नु
महीकृते ॥ ३५ ॥ निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन। पाप-

पुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलि-
ष्यति ॥ मन्वादि केचिद्ब्रुवते ह्यास्तिकादि तथा परे । तथोपरिचराद्यन्ये
भारतं परिचक्षते ॥ भारतं सर्ववेदाश्च तुलामारोपिताः पुरा । देवैर्ब्रह्मा-
दिभिः सर्वैर्ऋषिभिश्च समन्वितैः ॥ व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत
भारतम् । महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ॥ निरुक्तमस्य यो वेद

---

मेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥ तस्मान्नार्हा वयं हन्तुं धार्त-
राष्ट्रान्स्वबान्धवान् । स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥३७॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः । कुलक्षयकृतं दोषं मित्रद्रोहे च
पातकम् ॥ ३८ ॥ कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् । कुल-
क्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥ कुलक्षये प्रणश्यन्ति कुलधर्माः
सनातनाः । धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥ अधर्माभि-
भवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः । स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्ण-
संकरः ॥४१॥ संकरो नरकायैव कुलघ्नानां कुलस्य च । पतन्ति पितरो-
ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥ दोषैरेतैः कुलघ्नानां वर्णसंकर-
कारकैः । उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥ उत्सन्न-
कुलधर्माणां मनुष्याणां जनार्दन । नरके नियतं वासो भवतीत्यनुशुश्रुम
॥ ४४ ॥ अहो बत महत्पापं कर्तुं व्यवसिता वयम् । यद्राज्यसुखलोभेन
हन्तुं स्वजनमुद्यताः ॥ ४५ ॥ यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥ संजय उवाच ॥ एव-
मुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् । विसृज्य सशरं चापं शोक-
संविग्नमानसः ॥४७॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योग-
शास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥ १ ॥
संजय उवाच ॥ तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् । विषीदंतमिदं
वाक्यमुवाच मधुसूदनः ॥ १ ॥ श्रीभगवानुवाच ॥ कुतस्त्वा कश्मलमिदं
विषमे समुपस्थितम् । अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥ क्लैब्यं
मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते । क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ





सर्वपापैः प्रमुच्यते । यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ॥
विराटोद्योगसारवानि ''त्यादि तद्वाक्यपर्यालोचनया ऋषिसंप्रदायात्
" को ह्यन्यः पुंडरीकाक्षान्महाभारतकृद्भवे''दित्यादिपुराणग्रन्थान्तरगत-
वाक्यार्थान्यथानुपपत्त्या नारदाध्ययनादिलिङ्गैश्चावसीयते । कथमन्यथा
भारतनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः? । प्रसिद्धश्च सोऽर्थः । कथं चास्य
न कर्तुं शक्यते ? । ग्रन्थान्तरगतत्वाच्च नाविद्यमानस्तुतिः । न च कर्तु-
रेव । इतरत्रापि साम्यात् । तत्र च सर्वभारतार्थसंग्रहां वासुदेवार्जुन-
संवादरूपां भारतपारिजातमधुभूतां गीतामुपनिबबन्ध । तच्चोक्तम् ।
" भारतं सर्वशास्त्रेषु भारते गीतिका वरा । विष्णोः सहस्रनामापि ज्ञेयं
पाठ्यं च तद्द्वयमि 'ति महाकौर्मे । " स हि धर्मः सुपर्याप्तो ब्रह्मणः
पदवेदन " इत्यादि च । तत्र सेनयोर्मध्ये बांधवादिमोहजालसंवृतं
विषीदंतमर्जुनं भगवानुवाच ॥ प्रज्ञावादान् स्वमनीषोत्थवचनानि ।

---

परंतप ॥३॥ अर्जुन उवाच ॥ कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥ गुरूनहत्वा हि महानु-
भावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके । हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥५॥ न चैतद्विद्मः कतरन्नो गरीयो यद्वा
जयेम यदि वा नो जयेयुः । यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः
प्रमुखे धार्तराष्ट्राः ॥ ६ ॥ कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्म-
संमूढचेताः । यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां
त्वां प्रपन्नम् ॥७॥ न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रि-
याणाम् । अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥८॥
संजय उवाच ॥ एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः । न योत्स्य इति
गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥ तमुवाच हृषीकेशः प्रहसन्निव
भारत । सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१०॥ श्रीभगवानुवाच ॥
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे । गतासूनगतासूंश्च नानु-

कथमशोच्याः । गतासून् । किमिति । न त्वेवाहम् ॥ ईश्वरनित्यत्वस्याप्रस्तुतत्वाद्दृष्टान्तत्वेनाह । न त्वेवेति । यथाहं नित्यः सर्ववेदान्तेषु प्रसिद्धः एवं त्वमेते जनाधिपाश्च नित्याः । देहिनो भाव एतद्भवति । तदेवासिद्धमिति चेन्न । देहिनोऽस्मिन्यथा कौमारादिशरीरभेदेपि देही तदीक्षिता सिद्धः । एवं देहान्तरप्राप्तावपीक्षितृत्वात् । न हि जडस्य शरीरस्य कौमाराद्यनुभवः संभवति । मृतस्यादर्शनात् । मृतस्य वाय्वाद्यपगमादनुभवाभावः । अहं मनुष्य इत्याद्यनुभवाच्चैतत्सिद्धमिति चेन्न । सत्येवाविशेषे देहे सुप्त्यादौ ज्ञानादिविशेषादर्शनात् । समश्चाभिमानो मनसि । काष्ठादिवच्च । श्रुतेश्च । प्रामाण्यं च प्रत्यक्षादिवत् । न च बौद्धादिवाक्यवत् । अपौरुषेयत्वात् । न ह्यपौरुषेये पौरुषेयाज्ञानादयः कल्पयितुं शक्याः । विना च कस्यचिद्वाक्यस्यापौरुषेयत्वं सर्वसमयाभिमतधर्माद्यसिद्धिः । यश्च तौ नांगीकुरुते नासौ समयी । अप्रयोजकत्वात् । मास्तु धर्मोऽनिरूप्यत्वादिति चेन्न । सर्वाभिमतस्य प्रमाणं विना निषेद्धुमशक्यत्वात् । न च सिद्धिरप्रामाणिकस्येति चेन्न । सर्वाभिमतेरेव प्रमाणत्वात् । अन्यथा सर्ववाचिकव्यवहारासिद्धेश्च । न च मया श्रुतमिति तव ज्ञातुं शक्यं । अन्यथा वा प्रत्युत्तरं स्यात् । भ्रांतिर्वा तव स्यात् । सर्वदुःखकारणत्वं वा स्यात् । एको वान्यथा स्यात् । रचितत्वे च धर्मप्रमाणस्य कर्तुरज्ञानादिदोषशंका स्यात् । न चादोषत्वं स्ववाक्येनैव सिद्ध्यति । न च येन केनचिदपौरुषेयमित्युक्तमुक्तवाक्यसमं । अनादिकालपरिग्रहसिद्धत्वात् । अतः प्रामाण्यं श्रुतेः । अतः कुतर्के धीरस्तत्र न मुह्यति । अथवा जीवनाशं देहनाशं वापेक्ष्य शोकः ? । न तावज्जीवनाशं । नित्यत्वादित्याह । नत्वेवेति । नापि देहनाशमित्याह । देहिन इति ।

---

शोचन्ति पण्डिताः ॥११॥ न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतःपरम् ॥ १२ ॥ देहिनोऽस्मिन्यथा देहे



यथा कौमारादिदेहहानेन जरादिप्राप्तावशोकः एवं जीर्णादिदेहहानेन देहांतरप्राप्तावपि ॥ तथापि तद्दर्शनाभावादिना शोक इति चेन्नेत्याह । मात्रास्पर्शा इति । मीयंत इति मात्रा विषयाः तेषां स्पर्शाः संबंधाः त एव शीतोष्णसुखदुःखदाः । देहे शीतोष्णादिसम्बन्धाद्धि शीतोष्णाद्यनुभव आत्मनः । ततश्च सुखदुःखे । न ह्यात्मनः स्वतो दुःखादिः संभवति । कुतः । आगमापायित्वात् । यद्यात्मनः स्वतः स्युः सुप्तावपि स्युः । अतो यतो मात्रास्पर्शा जाग्रदादावेव ते संति नान्यदेति तदन्वयव्यतिरेकित्वात्तन्निमित्ता एव नात्मनः स्वतः । आत्मनश्च तैर्विषयविषयिभावसंबंधादन्यः संबंधो नास्ति । न चागमापायित्वेपि प्रवाहरूपेण नित्यत्वमस्ति । सुप्तिप्रलयादावभावादित्याह । अनित्या इति । अतश्चात्मनो देहाद्यात्मभ्रम एव सुखदुःखकारणं । अतस्तद्विमुक्तस्य बंधुमरणादिदुःखं न भवति । अतोऽभिमानं परित्यज्य तान् शीतोष्णादींस्तितिक्षस्व ॥ अतः प्रयोजनमाह । यं हीति । यमेते मात्रास्पर्शा न व्यथयंति । पुरि शयमेव संतं । शरीरसंबंधाभावे सर्वेषामपि व्यथाभावात्पुरुषमिति विशेषणं । कथं न व्यथयंति ? । समदुःखसुखत्वात् । तत्कथं ? । धैर्येण ॥ नित्य आत्मेत्युक्तं । किमात्मैव नित्य आहोस्विदन्यदपि । अन्यदपि तत्किमित्यत आह । नासत इति । असतः कारणस्य सतो ब्रह्मणश्चाभावो न विद्यते । "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तमे"ति वचनाच्छ्रीविष्णुपुराणे । पृथग्विद्यत इत्यादरार्थः । असतः कारणत्वं

---

कौमारं यौवनं जरा । तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥
मात्रास्पर्शास्तु कौंतेय शीतोष्णसुखदुःखदाः । आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥ यं हि न व्यथयंत्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥ नासतो विद्यते भावो
नाभावो विद्यते सतः । उभयोरपि दृष्टोऽतस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

च "सदसद्रूपया चासौ गुणमय्याऽगुणो विभुरि"ति श्रीभागवते । असतः सदजायतेति च । अव्यक्तेश्च । संप्रदायतश्चैतत्सिद्धमित्याह । उभयोरपीति । अंतो निर्णयः ॥ किं बहुना । यद्देशतोऽनंतं तन्नित्यमेव वेदाद्यन्यदपीत्याह । अविनाशीति । नापि शापादिना विनाश इत्याह । विनाशमिति । अव्ययं च तत् ॥ भवतु देहस्यापि कस्यचिन्नित्यत्वमिति नेत्याह । अंतवंत इति । अस्तु तर्हि दर्पणनाशात्प्रतिबिंबनाशवदात्मनाश इत्यत आह । नित्यस्येति । शरीरिण इति ईश्वरव्यावृत्तये । न च नैमित्तिकनाश इत्याह । अनाशिन इति । कुतः । अप्रमेयेश्वरसरूपत्वात् । न ह्युपाधिबिंबसन्निध्यनाशे प्रतिबिंबनाशः सति च प्रदर्शके । स्वयमेवात्र प्रदर्शकः । चित्त्वात् । नित्यश्चोपाधिः कश्चिदस्ति । "प्रतिपत्तौ विमोक्षस्य नित्योपाध्या स्वरूपया । चिद्रूपया युतो जीवः केशवप्रतिबिंबक" इति भगवद्वचनात् ॥ व्यवहारस्तु भ्रांत इत्याह । य एनमिति । कुतः । उक्तहेतुभ्यो नायं हंति न हन्यते । न हि प्रतिबिंबस्य क्रिया । स हि बिंबक्रिययैव क्रियावान् । ध्यायतीवेति श्रुतेश्च ॥ अत्र मंत्रवर्णोप्यस्तीत्याह । न जायत इति । न चेश्वरज्ञानवद्भूत्वा भविता । तद्धि "तदैक्षत" । "देशतः कालतो योसाववस्थातः स्वतोन्यतः । अविलुप्तावबोधात्मे"त्यादिश्रुतिस्मृतिसिद्धं । कुतः । अजादिलक्षणेश्वरसरूपत्वात् । शाश्वतः सदैकरूपः । पुरं देहमणतीति पुराणः । तथापि न हन्यते हन्यमानेपि देहे ॥ अतो य एवं वेद स कथं कं घातयति हन्ति वा ।

---

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् । विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥ अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः । अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥ य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥ वेदाविना-





अविनाशिनं नैमित्तिकनाशरहितं । नित्यं स्वाभाविकनाशरहितं । अथवा अविनाशिनं दोषयोगरहितं । नित्यं सदाभाविनं । इति सर्वत्र विवेकः । दोषयुक्तपुरुषादिषु नष्टशब्दप्रयोगात् ॥ देहात्मविवेकार्थं दृष्टांतमाह । वासांसीति ॥ स्वतः प्रायोनिमित्तैश्चाविनाशिनोपि केनचिन्निमित्तविशेषेण स्यात् । ककच्छेदवत् इत्यतो विशेषनिमित्तानि निषेधति । नैनमिति ॥ वर्तमाननिषेधात्स्यादुत्तरत्रेत्यत आह । अच्छेद्य इति । वर्तमानादर्शनाद्युक्तमयोग्यत्वमिति सूचयति वर्तमानापदेशेन । कुतोऽयोग्यता नित्यसर्वगतादिविशेषणेश्वरसरूपत्वात् । शाश्वत इत्येकरूपत्वमात्रमुक्तम् । स्थाणुशब्देन नैमित्तिकमन्यथात्वं निवारयति । नित्यत्वं सर्वगतत्वविशेषणम् । अन्यथा पुनरुक्तेः । ऐक्योक्तावप्यनुक्तविशेषणोपादानान्नेश्वरैक्ये पुनरुक्तिः । युक्ताश्च बिंबधर्माः प्रतिबिंबेऽविरोधे । तत्ता च "रूपं रूपं प्रतिरूपोबभूव" "आभास एव चे"त्यादिश्रुतिस्मृतिसिद्धा । न चांशत्वविरोधः । तस्यैवांशत्वात् । न चैकरूपैवांशता । प्रमाणं चोभयविधवचनमेव । न चांशस्य प्रतिबिम्बत्वं कल्प्यम् । गाध्यादिष्वप्यंशबाहुरूप्यदृष्टेरितरत्रादृष्टेः । स्थाणुत्वेपि तदैक्षतेत्याद्यविरुद्धमीश्वरस्य । उभयविधवाक्यात् । अचिन्त्यशक्तेश्च । न च मायैकम् । "त्वयीश्वरे ब्रह्मणि नो विरुध्यते" । "न योगित्वादीश्वरत्वात्" । "चित्रं न चैतत्त्वयि कार्यकारण" इत्याद्यैश्वर्येणैव विरुद्धधर्माविरोधोक्तेः । महातात्पर्याच्च । मोक्षो हि महापुरुषार्थः । तत्रापि

---

शिनं नित्यं य एनमजमव्ययम् । कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२२॥ नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः । न चैनं क्लेदयंत्यापो न शोषयति मारुतः ॥ २३ ॥ अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥ अव्यक्तोऽय-

मोक्ष एवार्थः। "अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे। अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमेतयोः"। "पुण्यचितो लोकः क्षीयत" इत्यादिश्रुतिस्मृतिभ्यः। स च विष्णुप्रसादादेव सिद्ध्यति। "वासुदेवमनाराध्य को मोक्षं समवाप्नुयात्"। "तुष्टे तु तत्र किमलभ्यमनन्त ईशे"। "तत्प्रसादादवाप्नोति परां सिद्धिं न संशयः"। "येषां स एव भगवान्दययेदनन्तस्सर्वात्मना श्रितपदो यदि निर्व्यलीकम्। ते वै विदन्त्यतितरन्ति च देवमायां नैषां ममाहमिति धीः श्वसृगालभक्ष्ये"। "तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते"। "ऋते यदस्मिन्भव ईश जीवास्तापत्रयेणोपहता न शर्म। आत्मँल्लभन्ते भगवंस्तवांघ्रिच्छायांशविद्यामत आश्रयेम"। "ऋते भवत्प्रसादाद्धि कस्य मोक्षो भवेदिह"। "तमेवं विद्वानि" त्यादिश्रुतिस्मृतिभ्यः। स चोत्कर्षज्ञानादेव भवति। लोकप्रसिद्धेः। लोकसिद्धमविरुद्धमन्यत्राप्यङ्गीकार्यम्। अहल्याजारत्वाद्यपि 'दोषकं... पि ते न बहुतरो लेप आसीदि'त्युत्कर्षमेव वक्ति। बहुनरकफलोह्यसौ। "तस्य न लोम च न मीयत" इति श्रुत्यन्तराच्च। "यो मामेवमसंमूढो जानाति पुरुषोत्तम"मिति तदुक्तेश्च। "सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः। विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा। पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा। नैकांशसममाहात्म्याः श्रीशेषब्रह्मशंकरा"इति नारदीये। अन्योत्कर्ष ऐक्यं च। "तथैव सर्वशास्त्रेषु महाभारतमुत्तमम्"। "कोह्यन्यः पुंडरीकाक्षान्महाभारतकृद्भवेदि"त्यादिग्रन्थान्तरसिद्धोत्कर्षमहाभारतविरुद्धम्। तत्र हि। "नास्ति नारायणसमं न भूतं न भविष्यति एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम्"। "यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः"। "न त्वत्समोस्त्यभ्यधिक" इत्यादिषु साधारणप्रश्नावसर एव महान्तमुत्कर्षं विष्णोर्वक्ति। अन्यत्र यत्किंचिदुक्तावप्यसाधारण एवावसरे।



तद्धि अग्न्यादेरपि वेदादावस्ति। "त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः"। "विश्वस्मादिन्द्र उत्तर" इत्यादिषु। तद्ग्रन्थविरोधाच्च। तथा हि स्कान्दे शैवे। "यदन्तरं व्याघ्रहरीन्द्रयोर्वने यदन्तरं मेरुगिरीन्द्रविन्ध्ययोः। यदन्तरं सूर्यसुरेड्यविम्बयोस्तदन्तरं रुद्रमहेन्द्रयोरपि॥ यदन्तरं सिंहगजेन्द्रयोर्वने यदन्तरं सूर्यशशांकयोर्दिवि। यदन्तरं जाह्नविसूर्यकन्ययोस्तदन्तरं ब्रह्मगिरीशयोरपि॥ यदन्तरं प्रलयजवारिविप्रुषोर्यदन्तरं स्तम्बहिरण्यगर्भयोः। स्फुलिंगसंवर्तकयोर्यदन्तरं तदन्तरं विष्णुहिरण्यगर्भयोः॥ अनन्तत्वान्महाविष्णोस्तदन्तरमनन्तकम्। माहात्म्यसूचनार्थाय ह्युदाहरणमीरितम्॥ तत्समो ह्यधिको वापि नास्ति कश्चित्कदाचन। एतेन सत्यवाक्येन तमेव प्रविशाम्यह"मित्याद्याह। तत्रैव शिवं प्रति मार्कण्डेयवचनम्। "संसारार्णवनिर्मग्न इदानीं मुक्तिमेष्यसी"त्यादि। पाद्मे शैवे मार्कण्डेयकथाप्रबन्धे शिवान्निषिध्य विष्णोरेव मुक्तिमाह। "अहं भोगप्रदो वत्स मोक्षदस्तु जनार्दन" इत्यादि। समब्राह्मविरोधाच्च। वेदश्चेतिहासाद्यविरोधेन योज्यः। यदि विद्यादिति वचनात्। अनिर्णयाचेन्द्रादिशंकयाऽन्यथा। तत्रापीष्टसिद्धिः। नामवैशेष्यात्। अतो भगवदुत्कर्ष एव सर्वागमानां महातात्पर्यम्। तथापि स्वतःप्रामाण्यात्सन्नेवोच्यते। अविरोधात्। न च प्रमाणसिद्धस्यान्यत्रादृष्टचापह्नवो युक्तः। धर्मवैचित्र्यादर्थानाम्। स्वतःप्रामाण्यानङ्गीकारे मानोक्तावप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः। अनन्यापेक्षया च तत्परत्वं सिद्धमागमानां। 'नारायणपरा वेदाः'। 'सर्वे वेदा यत्पदमामनन्ति'। 'वासुदेवपरा वेदा' इति। नचैतद्विरुद्धम्। ईश्वरनियमात्। अनादौ च तत्सिद्धम्। द्रव्यं कर्म च कालश्चेत्यादौ। प्रयोजकत्वं तु पूर्वोक्तन्यायेन। अतस्सिद्धमेतत्। तच्चानन्यापेक्षाचिन्त्यशक्तित्व एव युक्तम्। अतो न मायामयमेकम्। अचलत्वं त्वप्रहर्षमनानन्दमदुःखमसुखं अप्रज्ञं

असद्वा इत्यादिवत् । क्रियादृष्टेः । तपो मे हृदयं साक्षात्तनुर्विद्या क्रिया कृतिरित्याद्युक्तेः । अतश्च न मायामयं सर्वम् । ऐश्वर्यादिवाचिभगशब्देनैव संबोधनाच्च 'तं त्वा भगे'त्यादौ । स्वरूपत्वाच्च न मायामयत्वं युक्तम् । 'विज्ञानशक्तिरहमासमनन्तशक्तेः' । 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'' । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे''त्यादिवचनात् ॥ अतएवाव्यक्तादिरूपः ॥ अस्त्वेवमात्मनो नित्यत्वं तथापि देहसंयोगवियोगात्मकजनिमृती स्त एवेत्यत आह । अथ चेति ॥ कुतोऽशोकः । नियतत्वादित्याह । जातस्येति ॥ तदेव स्पष्टयति । अव्यक्तादीनीति ॥ देहयोगवियोगस्य नियतत्वादात्मनश्चेश्वरसरूपत्वात्सर्वथाऽनाशान्नशोकःकार्य इत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति । आश्चर्यवदिति । दुर्लभत्वेनेत्यर्थः । तद्धि आश्चर्यं

---

मचिन्त्योयमविकार्योऽयमुच्यते । तस्मादेवं विदित्वैनं नानुशोचितु-
मर्हसि ॥ २५ ॥ अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् । तथापि
त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं
जन्म मृतस्य च । तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र
का परिवेदना ॥ २८ ॥ आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव
चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्
॥ २९ ॥ देही नित्यमवध्योऽयं देहे सर्वस्य भारत । तस्मात्सर्वाणि
भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥ स्वधर्ममपि चावेक्ष्य न विकंपितु-
मर्हसि । धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥३१॥ यदृच्छया
चोपपन्नं स्वर्गद्वारमपावृतं । सुखिनः क्षत्रियाः पार्थ लभंते युद्धमीदृशम्
॥ ३२ ॥ अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि । ततः स्वधर्मं कीर्तिं
च हित्वा पापमवाप्स्यसि ॥ ३३ ॥ अकीर्तिं चापि भूतानि कथयिष्यन्ति
तेऽव्ययाम् । संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४ ॥ भयाद्रणा-



लोके । दुर्लभोपीश्वरसरूपत्वात्सूक्ष्मत्वाच्चात्मनस्तद्दृष्टा ॥ सांख्यं ज्ञानं । शुद्धात्मतत्वविज्ञानं सांख्यमित्यभिधीयत'इति भगवद्वचनाद्व्यासस्मृतौ । योग उपायः । 'दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयः प्रसिद्धय' इति प्रयोगाद्भागवते । नेतरौ सांख्ययोगावुपादेयत्वेन विवक्षितौ । कुत्रचित्सामस्त्येन । कर्मयोग इत्यादिप्रयोगाच्च । निन्दितत्वाच्चेतरयोर्मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पंचरात्रस्तुत्या । वेदानां त्वेकार्थत्वान्न विरोधः । पार्थक्यं तु सांख्याद्यपेक्षया युक्तम् । तत्रैव चित्रशिखण्डिशास्त्रे पंचरात्रमूले वेदैक्योक्तेश्च । एवमेव सर्वत्र सांख्ययोगशब्द उपायवाचको वर्णनीयः । युक्तेश्च । ज्ञानं हि जैवमुक्तम् । उपायश्च वक्ष्यते । बुध्यतेऽनयेति बुद्धिः । सांख्यविषयो यया वाचा बुध्यते सा वागभिहितेत्यर्थः ॥ योग इमां बुद्धिं शृण्वित्युक्तम् । बह्व्यो हि बुद्ध्यो मतभेदात् । तत्कथमेकत्र निष्ठां करोमीत्यत आह । व्यवसायात्मिकेति । सम्यग्युक्तिनिर्णीतानां मतानामैक्यमेवेत्यर्थः ॥ स्युरवैदिकानि मतानि अव्यवसायात्मकानि न तु वैदिकानि । तेपि हि केचित्कर्माणि स्वर्गादिफलान्येवाहुरित्यत आह । यामिमामिति । यामाहुस्तयेत्यन्वयः ।



---

दुपरतं मंस्यंते त्वां महारथाः । येषां च त्वं बहुमतो भूत्वा यास्यसि
लाघवम् ॥ ३५ ॥ अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः । निंदन्त-
स्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥ हतो वा प्राप्स्यसि स्वर्गं
जित्वा वा भोक्ष्यसे महीं । तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः
॥ ३७ ॥ सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ । ततो युद्धाय
युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥ एषा तेऽभिहिता सांख्ये बुद्धिर्योगे
त्विमां शृणु । बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते
महतो भयात् ॥ ४० ॥ व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन । बहु-
शाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥ यामिमां पुष्पितां

मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां वाचं प्रवदन्ति । वेदवादरताः । कर्मादिवाचकवेदवादरताः । वेदैर्यन्मुखत उच्यते तत्रैव रताः । नान्यदस्तीतिवादिनः । 'परोक्षविषया वेदाः' । 'परोक्षप्रिया इव हि देवाः' । 'मां विधत्तेभिधत्ते मामि'त्यादिभिः पारोक्ष्येण प्रायो भगवन्तं वदन्ति । भोगैश्वर्यगतिं प्रति । तत्प्राप्तिं प्रति तत्प्राप्तिफला एव वेदा इति वदन्तीत्यर्थः । तेषां सम्यग्युक्तिनिर्णयात्मिका बुद्धिः । समाधौ समाध्यर्थे न विधीयते । सम्यङ्निर्णीतार्थानां हीश्वरे मनस्समाधानं सम्यग्भवति । तद्धि मोक्षसाधनं । उक्तं चैतदन्यत्र । "न तस्य तत्वग्रहणाय साक्षाद्वरीयसीरपि वाचस्समासन् । स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यादि"ति ॥ तां योगबुद्धिमाह । त्रैगुण्यविषया इत्यादिनेतरदपोह्य । वेदानां परोक्षार्थत्वात्त्रिगुणसम्बन्धि स्वर्गादि प्रतीतितोऽर्थ इव भाति । "परोक्षवादी वेदोयमि"ति ह्युक्तम् । अतः प्रातीतिकेऽर्थे भ्रान्तिं मा कुर्वित्यर्थः । "वादो विषयकत्वं च मुखतो वचनं स्मृतमि-त्यभिधानम् । न तु वेदपक्षो निषिध्यते । "वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते" । "सर्वे वेदा यत्पदमामनन्ति" । "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनो रुचिरेव च । वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्यय" इति वेदानां सर्वात्मना विष्णुपरत्वोक्तेः । तद्विहितस्य तद्विरुद्धस्य च धर्माधर्मत्वोक्तेश्च ॥ तथापि काम्यकर्मिणां

---

वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥ कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् । क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥ भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् । व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन । निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥ यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु



फलं ज्ञानिनां न भवतीति साम्यमेवेत्यत आह । यावानर्थ इति । यथा यावानर्थः प्रयोजनमुदपाने कूपे भवति तावान् सर्वतः संप्लुतोदकेऽन्तर्भवत्येव । एवं सर्वेषु वेदेषु यत्फलं तद्विजानतोपि ज्ञानिनो ब्राह्मणस्य फलेंऽतर्भवति । ब्रह्माणतीति ब्राह्मणः । अपरोक्षज्ञानी । स हि ब्रह्म गच्छति । विजानत इति ज्ञानफलत्वं तस्य दर्शयति ॥ कामात्मनां निन्दा कृता कथम् । एषां स्वर्गकामो यजेतेत्यादौ कामस्यापि विहितत्वादित्यत आह । कर्मण्येवेति । त इत्युपलक्षणार्थम् । तव ज्ञानिनोपि न फलकामकर्तव्यता किम्वन्येषाम् । नत्वस्ति केषांचिन्न तेऽस्तीति । स हि ज्ञानी नरांश इन्द्रश्च । मोहादिस्त्वभिभवादेः । यदि तेषां शुद्धसत्त्वानां न स्याज्ज्ञानं क्वान्येषाम् ? । उपदेशादेश्च सिद्धं ज्ञानं तेषाम् । पार्थार्ष्टिषेणेत्यादि ज्ञानिगणनाच्च । कामनिषेध एवात्र । फलानि स्वातन्त्र्येण भवन्ति । न हि कर्मफलानि कर्माभावे यत्नतोपि भवन्ति । भवन्ति च काम्यकर्मिणो विपरीतप्रयत्नेप्यविरोधे । अतः कर्माकरण एव प्रत्यवायो न तु ज्ञानादिना वाऽकामनया फलाप्राप्तौ । अतः कर्मण्येवाधिकारः । अतस्तदेव कार्यम् । न तु कामेन ज्ञानादिनिषेधेन वा फलप्राप्तिः । कामवचनानां तु तात्पर्यं भगवतैवोक्तम् । रोचनार्थं फलश्रुतिः । "यथा भैषज्यरोचनमि"त्यादि भागवते । अतएव कामी यजेतेत्यर्थः । न तु कामीभूत्वेत्यर्थः । "निष्कामं ज्ञानपूर्वं चे"ति वचनात् । वक्ष्यमाणेभ्यश्च "वसन्ते वसन्ते ज्योतिषा यजेते"त्यादिभ्यश्च । अतो मा कर्मफलहेतुर्भूः । कर्मफलं तत्कृतौ हेतुर्यस्य स कर्मफलहेतुः स मा भूः । तर्हि न करोमीत्यत आह । मा त इति । कर्माकरणे [illegible] मास्त्वित्यर्थः । अन्यफलाभावेऽपि मत्प्रसादाख्यफलभावात् । प्रार्थना च तस्य युक्ता । "वृणीमहे ते परितोषणाये"त्यादि महदाचा-

---

ब्राह्मणस्य विजानतः ॥ ४६ ॥ कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥४७॥ योगस्थः कुरु कर्माणि

रात्। अनिन्दनाद्विशेषत इतरनिन्दनाच्च। सामान्यं विशेषो बाधत इति च प्रसिद्धम्। सर्वानानय नैकं मैत्रमित्यादौ। "अतो नैकात्म्यतां मे स्पृहयन्ति केचित्" "भक्तिमन्विच्छन्तः" "ब्रह्मजिज्ञासा" "विज्ञाय प्रज्ञां" "द्रष्टव्य" इत्यादिवचनेभ्यः। स्वार्थसेवकं प्रति न तथा स्नेहः। किं ददामीत्युक्ते सेवादियाचकं प्रति बहुतरः स्नेह इति लोकप्रसिद्धन्यायाच्च भक्तिज्ञानादिप्रार्थना कार्येति सिद्धम्॥ पूर्व श्लोकोक्तं स्पष्टयति। योगस्थ इति। योगस्थ उपायस्थः। संगं फल-स्नेहं त्यक्त्वा। तत एव सिद्ध्यसिद्ध्योः समो भूत्वा। स एव च मयोक्तो योगः॥ इतश्च योगाय युज्यस्वेत्याह। दूरेणेति। बुद्धि-योगाज्ज्ञानलक्षणादुपायात्। दूरेण अतीव। अतो बुद्धौ शरणं ज्ञाने स्थितिम्। फलं कर्मकृतौ हेतुर्येषां ते फलहेतवः॥ ज्ञानफलमाह। बुद्धियुक्त इति। सुकृतमप्यप्रियं मानुष्यादिफलं जहाति। बृहत्फलमप्युपासनादिनिमित्तम्। "न ह्यस्य कर्म क्षीयते" "अवि-दित्वास्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवती"त्यादिश्रुतिस्मृतिभ्यः। अतः कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्र। उभयक्षयश्रुतिरप्यनिष्टविषया। न हीष्टपुण्यक्षये किंचित्प्रयोजनम्। न चेष्टनाशो ज्ञानिनो युक्तः। इष्टाश्च केचिद्विषयाः। "स यदि पितृ-लोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" "प्रजापतेः सभां वेश्म प्रपद्ये यशोहं भवानि ब्राह्मणानां" "स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा"। "अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते"। "कामान्नीकामरूप्यनुसञ्चरन्" "स एकधा भवती"त्यादिश्रुतिभ्यः। बहुत्वेप्यात्मसुखस्य पुनरिष्टत्वात्कर्मसुखे न विरोधः। अनुभवशक्तिश्चे-

---

सङ्गं त्यक्त्वा धनञ्जय। सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥ दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय। बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥ बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।



श्वरप्रसादात्। श्रुतेश्च। न च शरीरपातात्पूर्वमेतत्। "स तत्र पर्येति"। "एतमानन्दमयमात्मानमुपसंक्रम्ये"त्याद्युत्तरत्र श्रवणात्। न चैकी-भूत एव ब्रह्मणा सह। "मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेदि"त्यादिनिन्दनान्मोक्षधर्मे। परिहारे पृथग्भोगाभिधानाच्च। शुकादीनां पृथग्दृष्टेश्च। "जगद्व्यापारवर्जमि"ति ऐश्वर्यमर्यादोक्तेश्च। "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता" इति च। उपाधिनाशे नाशाच्च प्रतिबिम्बस्य। न चैकीभूतस्य पृथग्ज्ञाने मानं पश्यामः। आसं दुःखी नासमिति ज्ञानविरोधाच्चेश्वरस्य। अनेन रूपेणेति च। भेदाभावात्। न च प्रतिबिम्बस्य बिम्बैक्यं लोके पश्यामः। उपाधि-नाशे मानं वा। "मग्नस्य हि परेऽज्ञान" इति दुःखात्मकत्वोक्तेश्च। यावदात्मभावित्वादित्युपाधिनित्यत्वाभिधानाच्च। अतोऽन्यवचनं प्रती-यमानमप्यौपचारिकम्। दृष्टाश्च ते भगवतो भिन्ना नारदेन। प्रति-शाखं च 'स एकधे'त्यादिषु भेदेन प्रतीयन्ते। विरोधे तु युक्तिमतामेव बलवत्त्वम्। युक्तयश्चात्रोक्ता मग्नस्य हीत्यादयः। अतो जले जलैकी-भाववदेकीभावः। उक्तं च "यथोदकं शुद्धे शुद्धं" "यथा नद्य" इत्यादौ। तत्राप्यन्योन्यात्मकत्वे वृद्ध्यसम्भवः। अस्ति चेषत्समुद्रेऽपि द्वारि। महत्त्वादन्यत्रादृष्टिः। "ता एवापो ददौ तस्य स ऋषिः शंसित-व्रत" इति महाकौर्मे समर्थानां भेदज्ञानाच्च। "नैव तत्प्राप्नुवन्त्येते ब्रह्मेशानादयः सुराः। यत्ते पदं हि कैवल्यमि"ति निषेधाच्च नारदीये। सविचारश्च निर्णयः कृतो मोक्षधर्मेषु। बलवांश्च सविचारो निर्णयो वाक्यमात्रात्। अतो "यत्र नान्यत्पश्यती"त्याद्यपि तदधीनसत्तादि-वाचि। अन्यथा कथमैश्वर्यादि स्यात्?। न च तन्मायामयमित्युक्तम्। अन्यथा कथं तत्रैव स एकधेत्यादि ब्रूयात्?। न च न ह वै सशरीरस्ये-त्यादि विरोधः। वैलक्षण्यात्तच्छरीराणाम्। अभौतिकानि हि तानि। नित्योपाधिविनिर्मितानीश्वरशक्त्या। तथा चोक्तम्। "शरीरं जायते

तेषां षोडश्या कलयैव चे''ति नारायणाष्टाक्षरकल्पे। वदन्ति च लौकिकाद्वैलक्षण्येऽभावशब्दम्। 'अप्रहर्षमनानन्दं' 'सुखदुःखबाह्य' इत्यादिषु। निरुक्त्यभावाच्च न तानि शरीराणि। तथा हि श्रुतिः। 'अशारीतिश्तच्छरीरमभवदि''ति। न हि तानि शीर्णानि भवन्ति। ''सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चे''तिवचनात् साम्यात्प्रयोगः। प्रयोगाच्च। ''अनिन्द्रिया अनाहारा अनिष्पन्दाः सुगन्धिनः''। 'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामि''त्यादि दृष्टदेहेष्वेव। न चैषाऽन्या गौणी मुक्तिः। ''बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति। योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णय''इत्यादित्यपुराणे तदन्यमुक्तिनिषेधात्। ये त्वत्रैव भगवन्तं प्रविशन्ति तेऽपि पश्चात्तत्रैव यान्ति। योग्यत्वं चात्र विवक्षितम्। युधिष्ठिरप्रश्न इतरनिन्दनाच्च। सायुज्यं च ग्रहवत्। तदुक्तेश्च। ''भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः। तथा मुक्तावुत्तमायां बाह्यान्भोगांस्तु भुञ्जत'' इति नारायणाष्टाक्षरकल्पे। अतोऽनिष्टस्यैव मोक्षः। सोऽस्त्येव सर्वात्मना। ''अदुःखं'' ''सर्वदुःखविवर्जिताः'' ''अशोकमहिमं'' ''यत्र गत्वा न शोचती''त्यादि श्रुतिभ्यः। विशेषवचनाभावाच्च। येषां त्वीषद्दृश्यते ते न सायुज्यं प्राप्ताः। सामीप्याद्येव तेषाम्। अतः प्रारब्धकर्मशेषभावात्तद्भुक्त्वा सायुज्यं गच्छन्ति। तच्चोक्तम्। ''सङ्कर्षणादयः सर्वे स्वाधिकारादनन्तरम्। प्रविशन्ति परं देवं विष्णुं नास्त्यत्र संशय'' इति व्यासयोगे। अतोऽनिष्टस्य सर्वात्मना वियोगः। ''परब्रह्मत्वमिच्छामि परमात्मञ्जनार्दने''त्यादिना ब्रह्मादिभिरपि प्रार्थितत्वात्। ''न मोक्षसदृशं किञ्चिदधिकं वा सुखं क्वचित्। ऋते वैष्णवमानन्दं वाङ्मनोगोचरं महदि''त्यादेश्च ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्ष इति सिद्धम्। अतो योगाय युज्यस्व। ज्ञानोपायाय। तद्धि कर्मकौशलम्।

---

तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥ कर्मजं बुद्धियुक्ता





तदुपायमाह। कर्मजमिति। कर्मजं फलं त्यक्त्वा। अकामनया ईश्वराय समर्प्य बुद्धियुक्ताः सम्यग्ज्ञानिनो भूत्वा पदं गच्छन्ति। सयोगकर्म ज्ञानसाधनं तन्मोक्षसाधनमिति भावः॥ कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीत्याह। यदेति। निर्वेदं नितरां लाभम्। प्रयोगात् ''तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्ये''त्यादि। न हि तत्र वैराग्यमुपपद्यते। तथासति पाण्डित्यादिति स्यात्। न च ज्ञानिनां भगवन्महिमादिश्रवणे विरक्तिर्भवति। ''आत्मारामा हि मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिरि''तिवचनात्। अनुष्ठानाच्च शुकादीनाम्। न च तेषां फलं नास्ति। तस्यैव महत्सुखत्वात्तेषाम्। ''या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्। सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्किम्वन्तकासिलुलितात्पततां विमानादि''त्यादि वचनात्। तेषामप्युपासनादिफलस्य साधितत्वात्। तारतम्याधिगतेश्च। तथाहि। यदि तारतम्यं न स्यात्। 'नात्यन्तिकं विगणयन्त्यपि ते प्रसादम्'। 'नैकात्म्यतां मे स्पृहयन्ति केचित्'। 'एकत्वमप्युत दीयमानं न गृह्णन्ती'ति मुक्तिमप्यनिच्छतामपि मोक्ष एव फलं तमिच्छतामपि स भवति सुप्रतीकादीनामिति कथमनिच्छतां स्तुतिरुपपन्ना स्यात्?। वचनाच्च। 'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे। तथा मुक्तिविशेषोऽपि ज्ञानिनां लिंगभेदने'। 'योगिनां भिन्नलिंगानामाविर्भूतस्वरूपिणाम्। प्राप्तानां परमानन्दं तारतम्यं सदैव ही'ति। 'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन। मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसी'ति च। साम्यवचनं तु प्राचुर्यविषयं दुःखाभावविषयं च। तथा चोक्तम्। 'दुःखाभावः परानन्दो लिंगभेदः समा मताः। तथापि परमानन्दो

---

हि फलं त्यक्त्वा मनीषिणः। जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥ यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति। तदा गन्तासि

ज्ञानभेदात्तु भिद्यत' इति नारायणाष्टाक्षरकल्पे । अतो न वैराग्यं श्रुतादावत्र विवक्षितम् । न च संकोचे मानं किंचित् । विद्यमान इतरत्र प्रयोगे । महद्भिः श्रवणीयस्य श्रुतस्य च वेदादेः फलं प्राप्स्यसीत्यर्थः ॥ तदेव स्पष्टयति । श्रुतिविप्रतिपन्नेति । पूर्वं श्रुतिभिर्वेदैर्विप्रतिपन्ना विरुद्धा सती वेदार्थानुकूलेन तत्त्वनिश्चयेन विपरीतवाग्भिरपि निश्चला भवति । ततश्च समाधावचला बुद्धिर्ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानन्दमग्नत्वात् । तदा योगमवाप्स्यसि उपायसिद्धो भवसीत्यर्थः ॥ स्थिता प्रज्ञा ज्ञानं यस्य स स्थितप्रज्ञः । भाष्यतेऽनयेति भाषा लक्षणमित्यर्थः । उक्तं लक्षणमनुवदति लक्षणान्तरं पृच्छामीति ज्ञापयितुं समाधिस्थस्येति । कं ब्रह्माणमीशं रुद्रं च वर्तयतीति केशवः । तथाहि निरुक्तिः कृता हरिवंशेषु रुद्रेण कैलासयात्रायाम् । 'हिरण्यगर्भः कः प्रोक्त ईशः शंकर एव च । सृष्ट्यादिना वर्तयति तौ यतः केशवो भवानि'ति वचनान्तराच्च । किमासीत किं प्रत्यासीत । नचार्जुनो न जानाति तल्लक्षणादिकम् । 'जानन्ति पूर्वराजानो देवर्षयस्तथैव च । तथापि धर्मान्पृच्छन्ति वार्तायै गुह्यवित्तये । न ते गुह्याः प्रतीयन्ते पुराणेष्वल्पबुद्धिना'मितिवचनात् ॥ गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका मत्तादिप्रवृत्तिवदिति 'या निशे'त्यादिना दर्शयिष्यन् तल्लक्षणं प्रथमत आह । प्रजहातीति । एवं परमानन्दतृप्तः किमर्थमेवं प्रवृत्तिं करोतीति प्रश्नाभिप्रायः । प्रारब्धकर्मणेषत्तिरोहितब्रह्मणो वासनया प्रायोऽल्पाभिसन्धि पूर्विका गमनादिवृत्तयः संभवन्तीत्याशयवान्परि-

---

निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥ श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला । समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥ अर्जुन उवाच ॥ स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव । स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥ श्रीभगवानुवाच ॥ प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् । आत्मन्येवात्मना तुष्टः स्थितप्रज्ञ-



हरति । प्रायः सर्वान्प्रजहाति । शुकादीनामपीषद्दर्शनात् । 'त्वत्पादभक्तिमिच्छन्ति ज्ञानिनस्तत्वदर्शिन' इत्युक्तेस्तामिच्छन्ति । यदा त्विन्द्रादीनामाग्रहो दृश्यते तदाऽभिभूतं तेषां ज्ञानम् । तच्चोक्तम् । 'आधिकारिकपुंसां तु बृहत्कर्मत्वकारणात् । उद्भवाभिभवौ ज्ञाने ततोऽन्येभ्यो विलक्षणा' इति । अत एव वैलक्षण्यादनधिकारिणामाग्रहादि चेदस्ति न ते ज्ञानिन इत्यवगन्तव्यम् । न चात्र समाधिं कुर्वतो लक्षणमुच्यते । 'यः सर्वत्रानभिस्नेह' इति स्नेहनिषेधात् । न हि समाधिं कुर्वतस्तस्य शुभाशुभप्राप्तिरस्ति । असम्प्रज्ञातसमाधेः । सम्प्रज्ञातत्वविरोधः । तथापि न तत्रैवेति नियमः । 'कामादयो न जायन्ते यापि विक्षिप्तचेतसाम् । ज्ञानिनां ज्ञाननिर्धूतमलानां देवसंश्रयादि'ति स्मृतेः । मनोगता हि कामाः । अतस्तत्रैव तद्विरुद्धज्ञानोत्पत्तौ युक्तं हानं तेषामिति दर्शयति। मनोगतानिति। विरोधश्चोच्यते 'रसोप्यस्य परं दृष्ट्वा निवर्तत' इति। न चैत(द)दृष्ट्याऽपलपनीयम् । पुरुषवैशेष्यात्। आत्मना परमात्मना परमात्मन्येव स्थितः सन् । आत्माख्ये तस्मिन् स्थितस्य तत्प्रसादादेव तुष्टिर्भवति । 'विषयांस्तु परित्यज्य रामे स्थितिमतस्ततः । देवाद्भवति वै तुष्टिर्नान्यथा तु कथंचने'त्युक्तं हि नारायणरामकल्पे । अतो नात्मा जीवः ॥ तदेव स्पष्टयत्युत्तरैः श्लोकैस्त्रिभिः । एतान्येव ज्ञानोपायानि च । तच्चोक्तम् । 'तद्वै जिज्ञासुभिः साध्यं ज्ञानिनां यत्तु लक्षणमि'ति । शोभनाध्यासो रागः । 'रसो रागस्तथा रक्तिः शोभनाध्यास उच्यत' इत्यभिधानम् ॥ सर्वत्रानभिस्नेहत्वाच्छुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि ॥ न चैतल्लक्षणं ज्ञानमयत्नतोऽपि भवतीत्याहो-

---

स्तदोच्यते ॥ ५५ ॥ दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥ यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् । नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥ यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा

त्तरैः श्लोकैः। निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति। इतरविषयाकाङ्क्षाभावो वा। रसाकाङ्क्षादिर्न निवर्तते। स त्वपरोक्षज्ञानादेव निवर्तत इत्याह। विषया इति। 'इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः। वर्जयित्वा तु रसनामसौ रस्ये तु वर्धत' इति वचनाद्भागवते। रसशब्दस्य रागवाचित्वाच्च ॥ अपरोक्षज्ञानरहितज्ञानिनोऽपि साधारणयत्नवतोऽपि मनो हरन्तीन्द्रियाणि। पुरुषस्य शरीराभिमानिनः। को दोषस्ततः?। प्रमाथीनि प्रमथनशीलानि पुरुषस्य। तर्ह्यशक्यान्येवेत्यत आह। तानीति। बहुयत्नवतः शक्यानि। अतो यत्नं कुर्यादित्याशयः। युक्तो मयि मनोयुक्तः। अहमेव परः सर्वस्मादुत्कृष्टो यस्य स मत्परः। फलमाह। वशे हीति ॥ रागादिदोषकारणमाह परिहाराय श्लोकद्वयेन। संमोहोऽकार्येच्छा। तथा हि मोहशब्दार्थ उक्त उपगीतासु। 'मोहसंज्ञितम्। अधर्मलक्षणं चैव नियतं पापकर्मस्वि'ति। तथाचान्यत्र 'सम्मोहोऽधर्मकामिते'ति। स्मृतिविभ्रमः प्रतिषेधादिस्मृतिविनाशः। बुद्धिविनाशः सर्वात्मना दोषबुद्धिनाशः। विनश्यति नरकाद्यनर्थं प्राप्नोति। तथा ह्युक्तम्। 'अधर्मकामिनः शास्त्रे विस्मृतिर्जायते यदा। दोषाद्दृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यत' इति ॥ इन्द्रियजयफलमाहोत्तराभ्यां श्लोका-

---

प्रतिष्ठिता ॥ ५८ ॥ विषया विनिवर्तन्ते निराहारस्य देहिनः। रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥ यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः। इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥ तानि सर्वाणि संयम्य युक्त आसीत मत्परः। वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥ ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते। सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥ क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः। स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥६३॥ रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्। आत्मवश्यैर्विधेयात्मा





भ्याम्। विषयाननुभवन्नपि। विधेय आत्मा मनो यस्य सः। जितात्मेत्यर्थः। प्रसादं मनःप्रसादम्। कथं प्रसादमात्रेण सर्वदुःखहानिः?। प्रसन्नचेतसो हि बुद्धिः पर्यवतिष्ठति। ब्रह्मापरोक्ष्येण सम्यक्स्थितिं करोति। प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः॥ प्रसादाभावे दोषमाहोत्तराभ्यां श्लोकाभ्याम्। नहि प्रसादाभावे युक्तिः चित्तनिरोधः। अयुक्तस्य च बुद्धिः सम्यग्ज्ञानं नास्ति। तदेवोपपादयति। न चायुक्तस्येति। शान्तिर्मुक्तिः। 'शान्तिर्मोक्षोऽथनिर्वाण'मित्यभिधानात्॥ कथमयुक्तस्य भावना न भवति?। आह। इन्द्रियाणामिति। अनुविधीयते क्रियते नन्वीश्वरेणेन्द्रियाणामनु बुद्धिर्ज्ञानमित्यादिवक्ष्यमाणत्वात्। प्रज्ञां प्रज्ञानम्। उत्पत्स्यदपि निवारयतीत्यर्थः उत्पन्नस्याप्यभिभवो भवति ॥ तस्मात्सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानीति निगमयति। तस्मादिति ॥ उक्तं लक्षणं पिण्डीकृत्याह। या निशेति। या सर्वभूतानां निशा परमेश्वरस्वरूपलक्षणा। यस्यां सुप्तानीव न किंचिज्जानन्ति। तस्यामिन्द्रियसंयमयुक्तो ज्ञानी जागर्ति सम्यगापरोक्ष्येण पश्यति परमात्मानमित्यर्थः। यस्यां विषयलक्षणायां भूतानि जाग्रति तस्यां निशायामिव सुप्तः प्रायो न जानाति। मत्तादिवद्भ्रमनादि प्रवृत्तिः। तदुक्तम्। 'देहं तु तन्नचरमं' 'देहोपि दैववशग' इति

---

प्रसादमधिगच्छति ॥ ६४ ॥ प्रसादे सर्वदुःखानां हानिरस्योपजायते। प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥ नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना। न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥६६ इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥ तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥ या निशा सर्वभूतानां तस्यां जागर्ति संयमी। यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥ आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति

श्लोकाभ्याम् । मननयुक्तो मुनिः । पश्यत इत्यस्य साधनमाह ॥ तेन विषयानुभवप्रकारमाह । आपूर्यमाणमिति । यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति नोत्सेकं प्राप्नोति न च प्रयत्नं करोति न चाभावे शुष्यति । न हि समुद्रः सरित्प्रवेशाप्रवेशनिमित्तवृद्धिशोषौ बहुतरौ प्राप्नोति प्रयत्नं वा करोति । स मुक्तिं प्राप्नोतीत्यर्थः॥ एतदेव प्रपञ्चयति। विहायेति । कामान् विषयान् निस्स्पृहतया विहाय यश्चरति भक्षयति । भक्षयामीत्यहंकारममकारवर्जितश्च स हि पुमान् स एव च मुक्तिमधिगच्छतीत्यर्थः ॥ उपसंहरति। एषेति। ब्राह्मी स्थितिः ब्रह्मविषया स्थितिर्लक्षणम् । अन्तकालेऽप्यस्यां स्थित्वैव ब्रह्म गच्छति । अन्यथा जन्मान्तरं प्राप्नोति । यं यं वापीति वक्ष्यमाणत्वात् । ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम् । 'भोगेन त्वितर' इति ह्युक्तम् । सन्ति हि बहुशरीरफलानि कर्माणि कानिचित् । 'सप्तजन्मनि विप्रः स्यादि'त्यादेः । दृष्टेश्च ज्ञानिनामपि बहुशरीरप्राप्तेः । तथा ह्युक्तम् । 'स्थितप्रज्ञोपि यस्तूर्ध्वः प्राप्य रौद्रं पदं ततः । साङ्कर्षणं ततो मुक्तिमगाद्विष्णुप्रसादत' इति गारुडे । 'महादेव परे जन्मंस्तव मुक्तिर्निरूप्यत' इति नारदीये । निश्चितं फलं च ज्ञानम् । 'तस्य तावदेव चिरं' 'यदुचनार्चिषमेवाभिसम्भवती'त्यादिश्रुतिभ्यः। न च कायव्यूहापेक्षा। 'तद्यथैषीकातूलं' 'तद्यथा पुष्करपलाशे 'ज्ञानाग्निः सर्वकर्माणी'ति वचनेभ्यः । प्रारब्धे त्वविरोधः । प्रमाणाभावाच्च । न च तच्छास्त्रं प्रमाणम् । 'अक्षपादकणादानां सांख्ययोगजटाभृताम् । मतमालम्ब्य ये वेदं दूषयन्त्यल्प-

---

यद्वत् । तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ ७० ॥ विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः । निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥ एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति। स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥७२॥

इतिश्रीमद्भगवद्गीतासूपनिषत्सु ब्र०साङ्ख्ययोगो नाम द्वितीयोऽध्यायः॥



चेतस' इति वचनात् । यत्र तु स्तुतिः तत्र शिवभक्तानां स्तुतिपरत्वमेव न सत्यत्वम् । न हि तेषामपीतरग्रन्थविरुद्धार्थे प्रामाण्यम् । तथाह्युक्तम् । 'एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय । अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुर्वि'ति वाराहे । 'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः । चकार शास्त्राणि[च] विभुर्ऋषयस्तत्प्रचोदिताः । दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु । चक्रुर्वेदैश्च ब्राह्माणि वैष्णवान्विष्णुवेदतः । पंचरात्रं भारतं च मूलरामायणं तथा । तथा पुराणं भागवतं विष्णुवेद इतीरितः । अतः शैव पुराणानि योज्यान्यन्याविरोधत' इति नारदीये । अतो ज्ञानिनां भवत्येव मुक्तिः । भीष्मादीनां तु तत्क्षणे मुक्त्यभावः । स्मरंस्त्यजतीति वर्तमानापदेशो हि कृतः । तच्चोक्तम् । 'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा । विष्णुमाया तदा तेषां मनो बाह्यं करोतिही'ति गारुडे । न चान्येषां तदा स्मृतिर्भवति । 'बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिम् । भजन्ति तत्स्मृतिं त्वंते देवो याति न चान्यथे'त्युक्तेर्ब्रह्मवैवर्ते । निर्वाणमशरीरम् । 'कायो बाणं शरीरं चे'त्यभिधानात् । 'एतद्बाणमवष्टभ्ये'ति प्रयोगाच्च । निर्वाणशब्दप्रतिपादनमनिन्द्रिया इत्यादिवत् । कथमन्यथा सर्वपुराणादिप्रसिद्धाऽऽकृतिर्भगवत उपपद्यते ? । न चान्यद्भगवत उत्तमं ब्रह्म । 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' । 'भगवन्तं परं ब्रह्म परंब्रह्म जनार्दनः' । 'परमं यो महद्ब्रह्म' । 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' । 'योऽसावतीन्द्रियग्राह्यः' । 'नास्ति नारायणसमं न भूतं न भविष्यति' । 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रय' इत्यादिभ्यः । न च तद्ब्रह्मणो शरीरत्वादेतत्कल्प्यम् । तस्यापि शरीरश्रवणात् । 'आनन्दरूपममृतम्' । 'सुवर्णज्योतिः' । 'दहरोऽस्मिन्नन्तर आकाश' इत्यादिषु । यदि रूपं न

स्यात् । आनन्दमित्येव स्यात् । न त्वानन्दरूपमिति । कथं च सुवर्ण-
रूपत्वं स्यादरूपस्य? कथं दहरत्वम् ? दहरश्च ‘केचित्स्वदेहे’त्यादौ
रूपवानुच्यते । ‘ सहस्रशीर्षा पुरुषः ’ । ‘ रुग्मवर्णं कर्तारम् ’ । ‘आदि-
त्यवर्णं तमसः परस्तात् ’ ‘ सर्वतः पाणिपादं तत् ’ । ‘ विश्वतश्चक्षु-
रि’त्यादि वचनात । विश्वरूपाध्यायादेश्च रूपवानवसीयते । अतिपरि-
पूर्णतमज्ञानैश्वर्यवीर्यानन्दश्रीशक्त्यादिमांश्च भगवान् । ‘पराऽस्य शक्ति-
र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च’ । ‘ यः सर्वज्ञः ’ ।
‘ आनन्दं ब्रह्मणः ’ । ‘ एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजी-
वन्ति ’ । ‘ अनादिमध्यान्तमनन्तवीर्यम् ’ । ‘ सहस्रलक्षामितकान्ति-
कान्तम् ’ । ‘ मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ’ । ‘ विज्ञान-
शक्तिरहमासमनन्तशक्तेः ’ । ‘ तुर्यं तत्सर्वदृक्सदा ’ । ‘ आत्मानमन्यं-
च स वेद विद्वान् ’ । ‘ अन्यतमो मुकुन्दात्को नाम लोके भगवत्प-
दार्थः ’ । ‘ ऐश्वर्यस्य समग्रस्य ’ । ‘ अतीव परिपूर्णं ते सुखं ज्ञानं च
सौभगम् ’ । ‘यच्चात्ययुक्तं स्मर्तुं वा शक्तः कर्तुमतः पर’इत्यादिभ्यः ।
तानि सर्वाण्यन्योऽन्यस्वरूपाणि । ‘ विज्ञानमानन्दं ब्रह्म ’ । ‘ यस्य
ज्ञानमयं तपः ’ । ‘ स मा भग प्रविश स्वाहा ’ । ‘ न तस्य प्राकृता
मूर्तिर्मांसमेदोऽस्थिसम्भवा ’ । ‘ नयोगित्वादीश्वरत्वात्सत्यरूपाच्युतो
विभुः ’ । ‘ सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः’ । ‘ ज्ञानज्ञानः
सुखसुखः स विष्णुः परमोऽक्षर ’ इति पैङ्गिखिलेषु । ‘ देहोऽयं मे
सदानन्दो नायं प्रकृतिनिर्मितः । परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्य-
हमि’त्यादि ब्रह्मवैवर्ते । तदेव लीलया चासौ परिच्छिन्नादिरूपेण दर्श-
यति मायया । ‘ न च गर्भेऽवसद्देव्या न चापि वसुदेवतः । न चापि
राघवाज्जातो न चापि जमदग्नितः । नित्यानन्दोऽद्वयोऽप्येवं क्रीडतेऽ-
मोघदर्शन ’ इति पाद्मे । ‘ न वै स आत्माऽऽत्मवतामधीश्वरो भुंक्ते हि
दुःखं भगवान्वासुदेवः ’ । ‘ सर्गादेरीशिताऽजः परमसुखनिधिर्बोध-





रूपोऽप्यबोधं लोकानां दर्शयन्यो मुनिसुतविहतात्मप्रियार्थे जगाम ’ ।
‘ स ब्रह्मवन्द्यचरणो नरवत्प्रलापी स्त्रीसंगिनामिति रतिं प्रथयंश्चचार’ ।
‘पूर्तेरचिन्त्यवीर्यो यो यश्च दाशरथिः स्वयम् । रुद्रवाक्यमृतं कर्तुमजितो
जितवत्स्थितः’ ‘ योऽजितो विजितो भक्त्या गांगेयं न जघान ह ’ ।
‘न चाम्बां ग्राहयामास करुणः कोपरस्तत ’ इत्यादिभ्यश्च स्कान्दे । न
तत्र संसारसमानधर्मा निरूप्याः । यत्र च परावरभेदोऽवगम्यते ।
तत्राज्ञबुद्धिमपेक्ष्यावरत्वम् । विश्वरूपमपेक्ष्यान्यत्र । तच्चोक्तम् । ‘परि-
पूर्णानि रूपाणि समान्यखिलरूपतः । तथाप्यपेक्ष्य मन्दानां दृष्टिं
त्वामृषयोऽपि तु । परावरं वदन्त्येवं ह्यभक्तानां विमोहनमि’ति गारुडे ।
न चात्र किंचिदुपचरितादि वाच्यम् । अचिन्त्यशक्तेः पदार्थवैचित्र्या-
च्चेत्युक्तम् । ‘ कृष्णरामादिरूपाणि परिपूर्णानि सर्वदा । न चाणुमात्रं
भिन्नानि तथाप्यस्मान्विमोहसी’त्यादेश्च नारदीये । तस्मात्सर्वदा सर्व-
रूपेष्वपरिगणितानन्तगुणगणं नित्यनिरस्ताशेषदोषं च नारायणाख्यं
परं ब्रह्मापरोक्षज्ञान्यृच्छतीति सिद्धम् ॥ ॥ इति श्रीमदानन्दतीर्थभगव-
त्पादाचार्यविरचिते श्रीमद्गीताभाष्ये द्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥
ॐ ॥ आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र । ज्ञानसाधनत्वेनाकर्म
विनिन्द्य कर्म विधीयत उत्तराध्याये ॥ कर्मणो ज्ञानमत्युत्तममित्यभि-
हितं भगवता ‘दूरेण ह्यवरं कर्मे’त्यादौ । एवं चेत्किमिति कर्मणि घोरे
युद्धाख्ये नियोजयसि ? निवृत्तधर्मान्विनेत्याह । ज्यायसीति । कर्मणः
सकाशाद्बुद्धिर्ज्यायसी चेत्ते मता तर्हि ॥ ज्यायस्त्वेऽपि बुद्धेराधिकारि-
कत्वात्त्वं कर्मण्यप्यधिकृत इति तत्र नियोक्ष्यामीत्याशयवान्भगवानाह ।

---

अर्जुन उवाच ॥ ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन । तत्किं
कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥ व्यामिश्रेणैव वाक्येन बुद्धिं
मोहयसीव मे । तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥
श्रीभगवानुवाच ॥ लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।

लोक इति । द्विविधा अपि जनाः सन्ति । गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत् । तत्स्था एव ज्ञाननिष्ठाश्च जनकादिवत् । मद्धर्मस्था एवेत्यर्थः । साङ्ख्यानां ज्ञानिनां सनकादीनां योगिनामुपायिनां जनकादीनाम् । ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसंग्रहार्थत्वाच्च ये कर्मयोग्या भवन्ति तेऽपि योगिनः । निष्ठा स्थितिः । त्वं तु जनकादिवत्सकर्मैव ज्ञानयोग्यो न तु सनकादिवत्तत्त्यागेनेत्यर्थः । सन्ति हीश्वरेच्छयैव कर्मकृतः प्रियव्रतादयोऽपि ज्ञानिन एव । तथा ह्युक्तम् । 'ईश्वरेच्छया विनिवेशितकर्माधिकार' इति ॥ इतश्च नियोक्ष्यामीत्याह । न कर्मणामिति । न कर्मणां युद्धादीनामारम्भेण नैष्कर्म्यं निष्कर्मतां काम्यकर्मपरित्यागेन प्राप्यत इति मोक्षं नाश्नुते । ज्ञानमेव तत्साधनं न तु कर्माकरणमित्यर्थः । कुतः ? । पुरुषत्वात् । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः । यदि कर्माकरणेन मुक्तिः, स्यात्स्थावराणाम् । न चाकरणे कर्माभावान्मुक्तिर्भवति । प्रतिजन्मकृतानामनन्तकर्मणां भावात् । न च सर्वाणि कर्माणि भुक्तानि । एकस्मिन् शरीरे बहूनि हि कर्माणि करोति । तानि चैकैकानि बहुजन्मफलानि कानिचित् । तत्र चैकैकानि कर्माणि भुञ्जन्प्राप्नोत्येव शेषेण मानुष्यम् । ततश्च बहुशरीरफलानि कर्माणीत्यसमाप्तिः । तच्चोक्तम् । 'जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु । स्त्री वाप्यनूनदशकं देहं मानुषमार्जते । चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः । अतोऽविज्ञा परं देवं मोक्षाशा का महामुन' इति ब्राह्मे । यदि सादिः स्यात्संसारः पूर्वकर्माभावादतत्प्राप्तिः । अबन्धकत्वं त्वकामेनैव भवति । तच्च वक्ष्यते 'अनिष्टमिष्ट'मिति । ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः । 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति

---

ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥३॥ न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न च संन्यसनादेव सिद्धिं समधिगच्छति ॥४॥



सनातनमि'ति मानवे । अतस्तत्साम्यादकरणेऽपि भवतीत्यत आह । नचेति । संन्यासः काम्यकर्मपरित्यागः । 'काम्यानां कर्मणां न्यासं संन्यासमि'ति वक्ष्यमाणत्वात् । अकामकर्मणामन्तःकरणशुद्धिद्वारा ज्ञानान्मोक्षो भवति । तच्चोक्तम् । 'कर्मभिः शुद्धसत्त्वस्य वैराग्यं जायते हृदी'ति भागवते । विरक्तानामेव च ज्ञानमित्युक्तम् । 'न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् । स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यादि'ति । न तु फलाभावात् । कर्माभावात् । अतो न कर्मत्याग एव मोक्षसाधनम् । यत्याश्रमस्तु प्रायत्यार्थो भगवत्तोषणार्थश्च । अप्रयतत्वमेव हि प्रायो गृहस्थादीनां, इतरकर्मोपयोगात् । अप्रयतानां च न ज्ञानम् । तथाहि श्रुतिः । 'नाशान्तो नासमाहित' इति । महांश्च यत्याश्रमे तोषो भगवतः । तथा ह्याह । 'यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषिणीमि'ति नारायणाष्टाक्षरकल्पे । आधिकारिकास्तु तत्स्था एव प्रायत्ये समर्थाः । स एव च महान् भगवत्तोषः । तच्चोक्तम् । 'देवादीनामादिराज्ञां महोद्योगेऽपि नो मनः । विष्णोश्चलति तद्धोगोऽप्यतीव हरितोषणमि'ति पाद्मे ॥ न तु कर्माणि सर्वात्मना त्यक्तुं शक्यानीत्याह । न हीति ॥ तथापि शक्तितस्त्यागः कार्य इत्याह । कर्मेन्द्रियाणीति । मन एव प्रयोजकमिति दर्शयितुमन्वयव्यतिरेकावाह । मनसा स्मरन्मनसा नियम्येति । कर्मयोगं स्ववर्णाश्रमोचितम् । न तु गृहस्थकर्मैवेति नियमः । संन्यासादिविधानात् । सामान्यवचनाच्च ॥ अतो नियतं वर्णाश्रमोचितं कर्म कुरु ॥

---

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥५॥ कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥६॥ यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन । कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥७॥ नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः । शरीरयात्राऽपि च ते

'कर्मणा बध्यते जन्तुरि'ति कर्म बन्धकं स्मृतमित्यत आह । यज्ञार्था-
दिति । कर्म बन्धनं यस्य लोकस्य स कर्मबन्धनः । यज्ञो विष्णुः ।
यज्ञार्थं सङ्गरहितं कर्म न बन्धकमित्यर्थः । मुक्तसङ्ग इति विशेषणात् ।
'कामान्यः कामयत' इति श्रुतेश्च । 'अनिष्टमिष्टमि'ति वक्ष्यमाणत्वाच्च ।
'एतान्यपि तु कर्माणी'ति च । 'तस्मान्नेष्टियाजुकः स्यादि'ति च
विशेषवचनत्वे समेऽपि विशेषणं परिशिष्यते ॥ अत्रार्थवादमाह । सह
यज्ञा इति ॥ हेत्वन्तरमाह । अन्नादिति । यज्ञः पर्जन्यान्नत्वात्तत्कारण-
मुच्यते । पूर्वयज्ञविवक्षायां च तस्य चक्रप्रवेशो न भवति । तद्धापाद्यं
कर्मविधये । न तु साम्यमात्रेणेदानीं कार्यम् । मेघचक्राभिमानी च
पर्जन्यः । तच्च यज्ञाद्भवति । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुप-
तिष्ठति । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति स्मृतेः । उभय-
वचनादादित्यात्समुद्राच्चाविरोधः । अतश्च यज्ञात्पर्जन्योद्भवः सम्भवति ।
यज्ञो देवतामुद्दिश्य द्रव्यत्यागः । कर्मेतरक्रिया ॥ कर्म ब्रह्मणो जायते ।
'एष ह्येव(एनं)साधु कर्म कारयति' । 'बुद्धिर्ज्ञानमि'त्यादिभ्यः । न
च मुख्ये सम्भाव्यमाने पारम्पर्येणौपचारिकं कल्प्यम् । न च जडानां

---

न प्रसिद्ध्येदकर्मणः ॥ ८ ॥ यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥ सहयज्ञाः प्रजाः सृष्ट्वा
पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१०॥
देवान्भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः पर-
मवाप्स्यथ ॥ ११ ॥ इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥ यज्ञशिष्टाशिनः सन्तो
मुच्यन्ते सर्वकिल्बिषैः । भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥
॥ १३ ॥ अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः । यज्ञाद्भवति पर्जन्यो
यज्ञः कर्मसमुद्भवः ॥ १४ ॥ कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥ एवं प्रवर्तितं चक्रं



स्वतः प्रवृत्तिः सम्भवति । 'एतस्य वा अक्षरस्ये'त्यादि सर्वनियमन-
श्रुतेश्च । 'द्रव्यं कर्म च कालश्चे'त्यादेश्च । अचिन्त्यशक्तिश्चोक्ता ।
जीवस्य च प्रतिबिम्बस्य बिम्बपूर्वैव चेष्टा । 'न कर्तृत्वमि'त्यादि-
निषेधाच्च । अक्षराणि प्रसिद्धानि तेभ्योऽभिव्यज्यते परं ब्रह्म । अन्यथा
अनादिनिधनमचिन्त्यं परिपूर्णमपि ब्रह्म को जानाति? न च रूढिं
विना योगाङ्गीकारो युक्तः । परामर्शाच्च तस्मात्सर्वगतं ब्रह्मेति । न
ह्येकशब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते । तानि
चाक्षराणि नित्यानि । 'वाचा विरूपनित्यया' । 'अनादिनिधना
नित्या वागुत्सृष्टा स्वयम्भुवा' । 'अतएव च नित्यत्वमि'त्यादिश्रुति-
स्मृतिभगवद्वचनेभ्यः । दोषश्चोक्तः सकर्तृकत्वे । न चाबुद्धिपूर्वमुत्पन्ना-
नि । तत्प्रमाणाभावात् । निःश्वसितशब्दस्त्वक्लेशाभिप्रायो नाबुद्धि-
पूर्वाभिप्रायः । 'सोऽकामयते'त्यादेश्च । 'इष्टं हुत'मित्यादिरूपप्रपञ्चेन
सहाभिधानाच्च । महातात्पर्यविरोधाच्च । तच्चोक्तं पुरस्तात् । न ह्यस्वा-
तन्त्र्येणोत्पत्तिकर्तुः प्राधान्यम् । अस्वातन्त्र्यं च तदमतिपूर्वकत्वेन
भवति । यथा रोगादीनां पुरुषस्य तज्ज्ञत्वेऽपि । उत्पत्तिवचनान्यभिव्य-
क्त्यर्थान्यभिमानिदेवताविषयाणि च । नित्येत्युक्त्वोत्सृष्टेतिवचनात्
अभिव्यञ्जके कर्तृवचनं चास्ति । 'कृत्स्नं शतपथं चक्र' इति । कथ-
मादित्यस्था वेदास्तेनैव क्रियन्ते? वचनमात्राच्च निर्णयात्मकशारीर-
कोक्तं बलवत् । शास्त्रं योनिर्यस्येति तु शास्त्रयोनित्वम् । जन्माद्यस्ये-
त्युक्ते प्रमाणं हि तत्रापेक्षितम् । न तु तस्य जातत्वं वेदकारणत्वं वा ।
न हि वेदकारणत्वं जगत्कारणत्वे हेतुः । न हि विचित्रजगत्सृष्टेर्वेद-
सृष्टिरशक्या सृज्यत्वे । न च सर्वज्ञत्वे । यदि वेदस्रष्टा सर्वज्ञः
किमिति न जगत्स्रष्टा? तस्माद्वेदप्रमाणकत्वमेवात्र विवक्षितम् । अतो
नित्यान्यक्षराणि । यत एवं परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्म तस्मात्त-
न्नित्यं यज्ञे प्रतिष्ठितम् ॥ तानि चाक्षराणि भूताभिव्यङ्ग्यानीति चक्रम्

॥ तदेतज्जगच्चक्रं यो नानुवर्तयति स तद्विनाशकत्वादघायुः । पापनिमित्तमेव यस्यायुः सोऽघायुः ॥ तर्ह्यतीव मनःसमाधानमपि न कार्यमित्यत आह । यस्त्विति । रमणं परदर्शनादिनिमित्तं सुखम् । तृप्तिरन्यत्रालम्बुद्धिः । सन्तोषस्तज्जनकं सुखम् । 'संन्तोषस्तृप्तिकारणमि'त्यभिधानात् । परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः । अन्यत्र सर्वात्मनाऽलम्बुद्धिः । महच्च तत्सुखम् । तेनैवान्यत्रालम्बुद्धिरिति दर्शयति । आत्मन्येव च सन्तुष्ट इति । तत्स्थ एव सन्सन्तुष्ट इत्यर्थः । नान्यत्किमपि सन्तोषकारणमित्यवधारणम् । आत्मना तृप्तः । न ह्यात्मन्यलम्बुद्धिर्युक्ता । तद्वाचित्वं च 'वयं तु न वितृप्याम उत्तमश्लोकविक्रमैरि'ति प्रयोगात्सिद्धम् । अध्याहारस्त्वगतिका गतिः । 'आत्मरतिरेवे'त्यवधारणादसम्प्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यते । 'स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते यदा । स्वधर्मो मम तुष्टचर्थः सा हि सर्वैरपेक्षिते'ति वचनाच्च पञ्चरात्रे । अन्यदाऽन्यरतिरपीषत्सर्वो भवति । न च तत्रालम्बुद्धिमात्रमुक्तम् । आत्मतृप्त इति पृथगभिधानात् । कर्तृशब्दः कालावच्छेदेऽपि चायं प्रसिद्धः । 'यो भुंक्ते स तु न ब्रूयादि'त्यादौ । अतोऽसम्प्रज्ञातसमाधावेवैतत् । मानव इति ज्ञानिन एवासम्प्रज्ञातसमाधिर्भवतीति दर्शयति । मनु अवबोधन इति धातोः । परमात्मरतिश्चात्र विवक्षिता । 'विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति ही'ति वचनात् ॥ तस्य कर्मकाले वक्तव्योऽहमिति कश्चित्प्रत्युक्त्वा तत्कृतावात्मरत्यधिकः समोऽर्थो वा नास्ति । न च सन्ध्याद्यकृतौ कश्चिद्दोषोऽस्ति । न चैतदपहाय सर्वभूतेषु कश्चित्प्रयोजनाश्रयः । अर्थो येन दर्शनादिना भवति सोऽर्थव्यपाश्रयः । ज्ञानमात्रेण प्रत्यवायो



---

नानुवर्तयतीह यः । अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥१७॥ नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य



यद्यपि न भवति । तदर्जुनस्यापि सममिति न तस्य कर्मोपदेशयोग्ये तद्भवति । ईषत्प्रारब्धानर्थसूचकं च तद्भवति । महच्चेद्वृत्रहत्यादिवत् ॥ यतोऽसंप्रज्ञातसमाधेरेव कार्याभावः तस्मात्कर्म समाचर ॥ आचारोऽप्यस्तीत्याह । कर्मणैवेति । कर्मणा सह कर्म कुर्वत एवेत्यर्थः । कर्म कृत्वैव ततो ज्ञानं प्राप्येति वा । न तु ज्ञानं विना । प्रसिद्धं हि तेषां ज्ञानित्वं भारतादिषु । 'तमेवं विद्वानमृत इह भवती' त्यादिश्रुतिभ्यश्च । अत्रापि कर्मणां ज्ञानसाधनत्वोक्तेश्च बुद्धियुक्ता इति । गत्यन्तरं च 'नान्यःपंथा' इत्यस्य नास्ति । इतरेषां ज्ञानद्वाराऽप्यविरोधः । यत्र च तीर्थाद्येव मुक्तिसाधनमुच्यते । 'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा । अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधावि' त्यादौ । तत्र पापादिमुक्तिः । स्तुतिपरता च । तत्रापि हि कुत्रचिद्ब्रह्मज्ञानसाधनत्वमेवोऽच्यते । अन्यथा मुक्तिं निषिध्य 'ब्रह्मज्ञानं विना मुक्तिर्न कथञ्चिदपीष्यते । प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव ही' त्यादौ । न च तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्तं ज्ञाननियमं घ्नन्ति । यथा कश्चिद्दक्षं भृत्यं प्रत्युक्तान्ययमेव हि राजा किं राज्ञे' त्यादीनि । यथाऽऽह भगवान् । 'यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च । स्तावकान्येव तानि स्युरज्ञानां मोहकानि वा ॥ भवेन्मोक्षस्तु मद्दृष्टेर्नान्यतस्तु कथञ्चने' ति नारदीये । अतोऽपरोक्षज्ञानादेव मोक्षः । कर्म तु तत्साधनमेव ॥ स यद्वाक्यादिकं प्रमाणं

---

सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥ तस्मादसक्तः सततं कार्यं कर्म समाचर । असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥ कर्मणैव हि संसिद्धिमास्थिता जनकादयः । लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥ २० ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥ न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥ यदि ह्यहं न

कुरुते, यदुक्तप्रकारेण तिष्ठतीत्यर्थः ॥ विद्वदविदुषोः कर्मभेदमाह । प्रकृतेरिति । प्रकृतेर्गुणैरिन्द्रियादिभिः । प्रकृतिमपेक्ष्य गुणभूतानि हि तानि । तत्सम्बन्धीनि च । न हि प्रतिबिम्बस्य क्रिया ॥ कर्मभेदस्य गुणभेदस्य च तत्ववित् । गुणा इन्द्रियादीनि गुणेषु विषयेषु ॥ प्रकृतेर्गुणेषु इन्द्रियादिषु सम्मूढाः । इन्द्रियाद्यभिमानाद्विषयादिसङ्गः । गुणकर्मसु विषयेषु कर्मसु च । 'शब्दाद्या इन्द्रियाद्याश्च सत्वाद्याश्च शुभानि च । अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैरि'त्यभिधानात् । सत्त्वाद्यङ्गीकारे 'गुणा गुणेष्वि'त्ययुक्तं स्यात् । अतः सर्वाणि कर्माणि मय्येव सन्न्यस्य भ्रान्त्या जीवेऽध्यारोपितानि मय्येव विसृज्य भगवानेव सर्वाणि कर्माणि करोतीति मत्पूजेति च । आत्मानमधिकृत्य यच्चेतस्तदध्यात्मचेतः । सन्न्यासस्तु भगवान्करोतीति । निर्ममत्वं नाहं करोमीति ॥ फलमाह । ये म इति । ये

---

वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥२३॥ उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् । सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥ सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥ २५ ॥ न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् । जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥ प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ २७ ॥ तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः । गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥ प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु । तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥२९॥ मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥ ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३१॥ येत्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान्विद्धि



त्वेवं निवृत्तकर्मिणस्तेऽपि मुच्यन्ते ज्ञानद्वारा किम्वपरोक्षज्ञानिनः । न तु साधनान्तरमुच्यते । 'निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये । अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ॥ सर्वं तदन्तराऽधाय मुक्तये साधनं भवेत् । न किञ्चिदन्तराऽधाय निर्वाणायापरोक्षदृगि'ति ह्युक्तं नारायणाष्टाक्षरकल्पे । अत एव समुच्चयनियमो निराकृतः ॥ एवं चेत्किमिति ते मतं नानुतिष्ठन्ति लोका? इत्यत आह । सदृशमिति । प्रकृतिः पूर्वसंस्कारः ॥ तथापि शक्तितो निग्रहः । निग्रहात्सद्यः प्रयोजनाभावेऽपि भवत्येवातिप्रयत्नत इत्याशयवानाह । इन्द्रियस्येति । तथा ह्युक्तं 'संस्कारो बलवानेव ब्रह्माद्या अपि तद्वशाः । तथापि सोऽन्यथा कर्तुं शक्यतेऽतिप्रयत्नत' इति ॥ तथाप्युग्रं युद्धं कर्मेत्यत आह । श्रेयानिति ॥ बहवः कर्मकारणाः सन्ति । क्रोधादयः कामश्च । तत्र को बलवानिति पृच्छति । अथेति अथेत्यर्थान्तरं । तयोर्न वशमागच्छेदिति प्रश्नप्रापकम् ॥ यस्तु बलवान्प्रवर्तकः स एष कामः क्रोधोऽप्येष एव । तज्जन्यत्वात् । 'कामात्क्रोधोऽभिजायत' इति ह्युक्तं । यत्रापि गुरुनिन्दादिनिमित्तः क्रोधः तत्रापि भक्तिनिमित्तानिन्दाकामनिमित्त एव । ये त्वन्यथा वदन्ति ते सङ्करान्न सूक्ष्मं जानन्ति । उक्तं च । 'ऋते कामं न कोपाद्या जायन्ते हि कथञ्चने'ति । महाशनः । महद्भि कामभोग्यम् । महाब्रह्महत्यादि

---

नष्टानचेतसः ॥ ३२ ॥ सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३३॥ इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥ श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥ अर्जुन उवाच । अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः । अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥ श्रीभगवानुवाच । काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो

कारणत्वान्महापाप्मा । सर्वपुरुषार्थविरोधित्वाद्वैरी । कथं विरोधी सः? । इदमनेनावृतम् । यथा धूमेनाग्निरावृतः प्रकाशरूपोऽप्यन्येषां सम्यगदर्शनाय तथा परमात्मा । यथाऽऽदर्शो मलेनावृतोऽन्याभिव्यक्तिहेतुर्न भवति तथान्तःकरणं परमात्मादेर्व्यक्तिहेतुर्न भवति कामेनावृतम् । यथोल्बेनावृत्य बद्धो भवति गर्भः तथा कामेनावृतो जीवः ॥ शाश्वतो जातमपि ज्ञानं परमात्मापरोक्ष्याय न प्रकाशते कामेनावृतं ज्ञानिनोऽपि किम्वल्पज्ञानिनः ? । कामरूपेण कामाख्येन नित्यवैरिणा । दुष्पूरेण दुःखेन हि कामः पूर्यते । न हीन्द्रादिपदं सुखेन लभ्यते । यद्यपीन्द्रादिपदं प्राप्तः पुनर्ब्रह्मादिपदमिच्छतीत्यलंबुद्धिर्नास्तीत्यनलः । उक्तं च । 'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा । आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामक' इति ॥ वधार्थं शत्रोरधिष्ठानमाह । इन्द्रियाणीति । एतैर्ज्ञानमावृत्य बुध्यादिभिर्हि विषयगैर्ज्ञानमावृतं भवति ॥ हृताधिष्ठानो हि शत्रुर्नश्यति ॥ शत्रुहनन आयुधरूपं ज्ञानं वक्तुं ज्ञेयमाह । इन्द्रियाणीति । 'असङ्गज्ञानासिमादाय तरातिपारमि'ति ह्युक्तम् । शरीरादिन्द्रियाणि पराणि उत्कृष्टानि । न केवलं बुद्धेः परः श्रुत्युक्तप्रकारेणाव्यक्तादपि । 'अव्यक्तात्पुरुषः पर' इति

---

महापाप्मा विद्ध्येनमिह वैरिणं ॥ ३७ ॥ धूमेनाव्रियते वह्निर्यथाऽदर्शो मलेन च । यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतं ॥ ३८ ॥ आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा । कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥ इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते । एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥ तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ । पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥ इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥ एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ॥ जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्र०कर्मयोगो





(हि श्रुतिः) । न च तत्र तत्रोक्तैकदेशज्ञानमात्रेण भवति मुक्तिः । सार्वत्रिकगुणोपसंहारो हि भगवता गुणोपसंहारपादेऽभिहितः। 'आनन्दादयः प्रधानस्ये'त्यादिना । तथा चान्यत्र । 'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि । सर्वत्र ये गुणाः प्रोक्ताः सम्प्रदायागताश्च ये ॥ सर्वैस्तैः सह विज्ञाय ये पश्यन्ति परं हरिम् । तेषामेव भवेन्मुक्तिर्नान्यथा तु कथञ्चने'ति गारुडे । तस्मादव्यक्तादपि परत्वेन ज्ञेयः । न चात्र जीव उच्यते । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तत'इत्युक्तत्वात् । 'अविज्ञाय परं मत्तो जयः कामस्य वै कुत' इति च । अतः परमात्मज्ञानमेवात्र विवक्षितम् । आत्मानं मनः आत्मना बुद्ध्या ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

ॐ ॥ बुद्धेः परस्य माहात्म्यं कर्मभेदो ज्ञानमाहात्म्यं चोच्यतेऽस्मिन्नध्याये ॥ पूर्वानुष्ठितश्चायं धर्म इत्याह । इममिति ॥ 'मयि सर्वाणी'त्युक्तं तन्माहात्म्यमादितो ज्ञातुं पृच्छति । अपरमिति ॥ न तर्ह्यनादिर्भवानित्यत आह । अजोऽपीति । अव्यय आत्मा देहोऽपीत्यव्ययात्मा । 'अनन्तं विश्वतो मुखमि'ति रूपविशेषणमुत्तरत्र । 'एतन्नानावताराणां

---

नाम तृतीयोऽध्यायः ॥ श्रीभगवानुवाच । इमं विवस्वते योगं प्रोक्तवानहमव्ययम् । विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥ एवं परम्पराप्राप्तमिमं राजर्षयो विदुः । स कालेनेह महता योगो नष्टः परन्तप ॥२॥ स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः । भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥ अर्जुन उवाच । अपरं भवतो जन्म परं जन्म विवस्वतः । कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥ श्रीभगवानुवाच । बहूनि मे व्यतीतानि जन्मानि तव चार्जुन । तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥ अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥

निधानं बीजमव्ययमि'ति च । 'जगृह' इति तु व्यक्तिः । युक्तय-
स्तूक्ताः । आत्माऽनादित्वं तु सर्वसमम् । कथमनादिनित्यस्य जनिः ? ।
प्रकृतिं स्वामधिष्ठाय । प्रकृत्या जातेषु वसुदेवादिषु । तयैव तेषां
जात इव प्रतीयत (ये) इत्यर्थः । न तु स्वतंत्रामधिष्ठायेत्याह ।
स्वामिति । 'द्रव्यं कर्म चे'ति ह्युक्तम् । सा हि तत्रोक्ता । ततः
सर्वसृष्टेः । आत्ममायया आत्मज्ञानेन । प्रकृतेः पृथगभिधानात् ।
'केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माये'त्यभिधानम् । सृष्टि
कारणया तेषां शरीरादिसृष्ट्वा विमोहिकया जात इवाजात एव प्रतीयते
वा । उक्तं च । 'महदादेस्तु माता या श्रीर्भूमिरिति कल्पिता ।
विमोहिका च दुर्गाख्या ताभिर्विष्णुरजोऽपि हि । जातवत्प्रथते
ह्यात्मचिद्बलान्मूढचेतसामि'ति । ईश्वर ईशेभ्योऽपि वरः । तच्चोक्तम् ।
'ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् । वरोऽतईश्वराख्या ते
मुख्या नान्यस्य कस्य चिदि'ति ब्रह्मवैवर्ते । 'समर्थ ईश इत्युक्त
स्तद्वरत्वात्त्वमीश्वर'इति च ॥ न जन्मनैव परित्राणादिकं कार्यमिति
नियमः । तथापि लीलया स्वभावेन च यथेष्टचारी । तथा ह्युक्तम् ।
'देवस्यैष स्वभावोऽयम्' । 'लोकवत्तु लीलाकैवल्यम्' । 'क्रीडतो बालक
स्येव चेष्टां तस्य निशामय' । 'अरिभयादिव स्वयं पुराद्व्यवात्सीद्य-
दनन्तवीर्यः' । 'पूर्णोऽयमस्यात्र न किञ्चिदाप्यं तथापि सर्वाः कुरुते
प्रवृत्तीः । अतो विरुद्धेषुमिमं वदन्ति परावरज्ञा मुनयः प्रशान्ता'
इत्याद्यृग्वेदखिलेषु ॥ पृथङ्मुक्त्युक्तिः सर्वज्ञाननियमदर्शनार्थम् । न
तु तावन्मात्रेण मुक्तिरित्युक्तम् । 'वेदाद्युक्तं तु सर्वं यो ज्ञात्वोपास्ते सदा

---

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदा-
ऽऽत्मानं सृजाम्यहम् ॥७॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥८॥ जन्म कर्म च मे दिव्यमेवं
यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥९॥





हि मां । तस्यैव दर्शनपथं यामि नान्यस्य कस्यचिदि'त्युक्तेश्च महा-
कौर्मे । अत्रोक्तस्यैतज्ज्ञात्वैव जन्म नैतीति गतिः । नान्यस्य कस्यचिदिति
विशेषणात् । तत्त्वत इति विशेषणाच्च सर्वज्ञानमापतति । यत्रैवं
भवति तत्र तत्त्वत इति विशेषणे न विरोधः । उक्तं च । 'एकं च
तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः । न समर्थो महेन्द्रोऽपि तस्मात्सर्वत्र
जिज्ञसेदि'ति स्कान्दे ॥ सन्ति च तथा मुक्ता इत्याह । वीतरागेति ।
मन्मया मत्प्रचुराः । सर्वत्र मां विना न किञ्चित्पश्यन्तीत्यर्थः । न
च मद्भजनमात्रेण मुक्तिर्भवत्यन्यदेवतादिरूपेण । तथापि सर्वेषा
मानुरूप्येण फलं ददामीत्याह । ये यथेति । सेवयामि फलदानेन
न तु गुणभावेन । कथमयं विशेष इत्यत आह । मम वर्त्मेति ।
अन्यदेवता यजन्तोऽपि मम वर्त्मैवानुवर्तन्ते । सर्वकर्मकर्तृत्वाद्भो
क्तृत्वाच्च मम । 'येऽप्यन्यदेवताभक्ता' इति हि वक्ष्यति । यो देवानां
नामधा एक एवेति श्रुतिः । भगवानेव च तत्राभिधीयते । 'अजस्य
नाभावध्येकमर्पितमि'ति लिङ्गात् ॥ कुतो मम वर्त्मानुवर्तन्ते ? क्षिप्रं
हि । अतएव हि फलप्राप्तिः । 'तस्मात्ते धनसनय'इति हि श्रुतिः ॥
अहमेव हि कर्तेत्याह । चातुर्वर्ण्यमिति । चतुर्वर्णसमुदायः । सात्त्विको
ब्राह्मणः । सात्त्विकराजसः क्षत्रियः । राजसतामसो वैश्यः ।
तामसः शूद्र इति गुणविभागः । कर्मविभागस्तु शमो दम इत्यादिना
वक्ष्यते । क्रियायां वैलक्षण्यात्कर्ताऽप्यकर्ता । तथा हि श्रुतिः ।
'विश्वकर्मा विमना' इत्यादि । 'तनुर्विद्या क्रिया कृतिरि'ति च ।

---

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः । बहवो ज्ञानतपसा पूता
मद्भावमागताः ॥ १० ॥ ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥ काङ्क्षन्तः कर्मणां
सिद्धिं यजन्त इह देवताः । क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा
॥ १२ ॥ चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः । तस्य कर्तारमपि

साधितं चैतत्पुरस्तात् ॥ अत एव च न मां कर्माणि लिम्पन्ति । इतश्च न लिम्पन्तीत्याह । न मे कर्मफले स्पृहेति । इच्छामात्रं त्वस्ति न तु तत्राभिनिवेशः । तच्चोक्तम् । 'आकाङ्क्षन्नपि देवोऽसौ नेच्छते लोकवत्परः । न ह्याग्रहस्तस्य विष्णोर्ज्ञानं कामो हि तस्य त्वि'ति । न च केचिन्मुक्ता भवन्तीति क्रमेण सर्वमुक्तिः । तथा हि श्रुतिः । 'ज्ञात्वा तमेनं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वानि'ति 'कथं वा इत्यनन्ता इत्यनन्तवदिति होवाचे'ति ॥ एवं ज्ञात्वापि कर्मकरणे आचारोऽप्यस्तीत्याह । एवमिति । पूर्वतरं कर्म पूर्वभावीत्यर्थः ॥ कर्म कुर्वित्युक्तम् । तस्य कर्मणो दुर्विज्ञेयत्वमाह सम्यग्वक्तुम् । किं कर्मेति ॥ न केवलं तज्ज्ञात्वा मोक्ष्यसे ज्ञात्वैवेत्याशयवानाह । कर्मण इति । तच्चोक्तम् । 'अज्ञात्वा भगवान्कस्य कर्माकर्म विकर्मकम् । दर्शनं याति हि मुने कुतो मुक्तिश्च तद्विने'ति । अकर्म कर्माकरणम् । कर्माकर्मान्यद्विकर्म निषिद्धं कर्म बन्धकत्वात् । ततो विविच्य कर्मादि बोद्धव्यमित्यादि । न च शापादिना कवयोऽप्यत्र मोहिताः । अशक्यं चैतज्ज्ञातुमित्याह । गहनेति ॥ कर्मादिस्वरूपमाह । कर्मणीति । कर्मणि क्रियमाणे सत्यकर्म यः पश्येद्विष्णोरेव कर्म नाहं चित्प्रतिबिम्बः किञ्चित्करोमीति । अकर्मणि सुप्त्यादावकरणावस्थायां परमेश्वरस्य यः कर्म पश्यति अयमेव परमेश्वरः सर्वदा सर्वसृष्ट्यादि

---

मां विद्ध्यकर्तारमव्ययम् ॥१३॥ न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा । इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥ एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः । कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥ किं कर्म किमकर्मेति कवयोप्यत्र मोहिताः । तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥ कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः । अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥ कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ॥ स बुद्धिमान्मनुष्येषु स युक्तः



करोतीति । स बुद्धिमान् ज्ञानी स एव च युक्तो योगयुक्तः । सर्वाकरणात्स एव च कृत्स्नकर्मकृत् । कृत्स्नफलवत्त्वात् ॥ एतदेव प्रपञ्चयति । यस्येत्यादि श्लोकपञ्चकेन । उक्तप्रकारेण ज्ञानाग्निदग्धकर्माणम् ॥ न च कामसङ्कल्पाभावेनालम् । असङ्गं स्नेहं च त्यक्त्वा । ज्ञानस्वरूपमाह पुनः । नित्यतृप्त इति । नित्यतृप्तनिराश्रयेश्वरसरूपोऽहमस्मीति तथाविधः ॥ कामादित्यागोपायमाह । निराशीरिति । यतचित्तात्मा भूत्वा निराशीरित्यर्थः । आत्मा मनः । परिग्रहत्यागोऽनभिमानं । नैव किञ्चित्करोतीत्यस्याभिप्रायमाह । नाप्नोति किल्बिषमिति ॥ यतचित्तात्मनो लक्षणमाह । यदृच्छालाभेति । कथं द्वन्द्वातीतत्वमित्यत आह । समः सिद्धाविति ॥ उपसंहरति । गतसङ्गस्येति । गतसङ्गस्य फलस्नेहरहितस्य । मुक्तस्य शरीराद्यनभिमानिनः । ज्ञानावस्थितचेतसः । परमेश्वरज्ञानिनः ॥ ज्ञानावस्थितचेतस्त्वं स्पष्टयति । ब्रह्मार्पणमिति । सर्वमेतद्ब्रह्मेत्युच्यते । तदधीनसत्ताप्रतीतित्वात् । न तु तत्स्वरूपत्वात् । उक्तं हि । 'त्वदधीनं यतः सर्वमतः सर्वो भवानिति । वदन्ति मुनयः सर्वं न तु सर्वस्वरूपत' इति पाद्मे । 'सर्वं तत्प्रज्ञानेत्रमि'ति च । 'एतं ह्येव बह्वृचा'इत्यादि च । समाधिना सह ब्रह्मैव कर्म ॥ यज्ञभेदानाह । दैवमित्यादिना । दैवं भगवन्तम् । स एव तेषां यज्ञः । भगवदुपासनम् ।

---

कृत्स्नकर्मकृत् ॥ १८ ॥ यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः । ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥ त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥२०॥ निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥ यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः । समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥२२॥ गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥२३॥ ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥२४॥ दैवमेवापरे यज्ञं योगिनः पर्युपासते । ब्रह्माग्नावपरे

यज्ञमितिक्रियाविशेषणं । नान्यत्तेषामस्ति यतीनां केषाञ्चित् । यज्ञं भगवन्तं । 'यज्ञेन यज्ञं' । 'यज्ञो विष्णुर्देवते'त्यादि श्रुतिभ्यः । यज्ञेन प्रसिद्धेनैव । यज्ञं प्रतिजुह्वतीति सर्वत्र समं तं यज्ञमित्यादौ । उक्तं च । 'विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना । अयजन्मानसे यज्ञे पितरं प्रपितामह' इत्यादि ॥ आत्मसंयमाख्योपायाग्नौ ॥ द्रव्यं जुह्वतीति द्रव्ययज्ञाः । तपः परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति तपोयज्ञा इत्यादि । इदं तपो हविः एतद्ब्रह्माग्नौ जुहोमि तत्पूजार्थमिति होमः । तदर्पण एव च होमबुद्धिः ॥ अपरे प्राणायामपरायणाः प्राणमपाने जुह्वति अपानं च प्राणे । कुम्भकस्था एव भवन्तीत्यर्थः ॥ नियताहारत्वेनैव प्राणशोषात् प्राणान्प्राणेषु जुह्वति । 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनी'त्यादि श्रुत्युक्तप्रकारेण वा । अन्यदपि ग्रन्थान्तरे सिद्धं । 'यदस्याल्पाशनं तेन प्राणाः प्राणेषु वै हुता' इति । ब्रह्मणः परमात्मनो मुखे । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चे'ति हि वक्ष्यति । मानसवाचिककायिककर्मजा एव हि ते सर्वे । एवं ज्ञात्वा तानि कर्माणि कृत्वा विमोक्ष्यसे । युद्धं परित्यज्य यन्मोक्षार्थं करिष्यसि तदपि कर्म । अतो विहितम् न त्याज्यमिति

---

यज्ञं यज्ञेनैवोपजुह्वति ॥२५॥ श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति । शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥ सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे । आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥ द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा परे । स्वाध्यायज्ञानयज्ञाश्च यतयः शंसितव्रताः ॥ २८ ॥ अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे । प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥ अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥ यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनं । नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥३१॥ एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे । कर्मजान्विद्धि



भावः ॥ अखिलमुपासनाद्यङ्गयुक्तम् । ज्ञानफलमेवेत्यर्थः ॥ इदानीमपि ज्ञान्येव ॥ तथाप्यभिभवान्मोहः । मा तूक्ता । येन ज्ञानेन मय्यात्मभूते सर्वभूतान्यथो तस्मादेव मोहनाशात्पश्यसि ॥ करणभूतं ज्ञानं स्तौति पुनः श्लोकत्रयेण ॥ तत्साधनं विरोधिफलं च तदुत्तरैरुक्त्वोपसंहरति ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

ॐ ॥ तृतीयाध्यायोक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन ॥ यदृच्छालाभसन्तुष्ट इत्यादिना संन्यासम् । कुरु कर्मैवेत्यादिना कर्मयोगं

---

तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥ श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥३३॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥ यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव । येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥ अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः । सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६ ॥ यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥ न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥ श्रद्धावाँल्लभते ज्ञानं मत्परः संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥ अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥ योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् । आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४१ ॥ तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः । छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ॥ ४२ ॥ इति श्रीमद्भगवद्गीता० ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥ ॥ ४ ॥ अर्जुन उवाच ॥ सन्न्यासं कर्मणां कृष्ण पुनर्योगं च शंससि । यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥ श्रीभगवानुवाच ॥ सन्न्यासः

च । नियमनादिना सकललोककर्षणात्कृष्णः । तच्चोक्तम् । 'यतः कर्षसि देवेश नियम्य सकलं जगत् । अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिन' इति महाकौर्मे । संन्यासशब्दार्थं भगवानेव वक्ष्यति । अयं प्रश्नाभिप्रायः । यदि संन्यासः श्रेयोऽधिकः स्यात्तर्हि संन्यासस्यैतद्विरोधि युद्धमिति ॥ नायं संन्यासो यत्याश्रमः । द्वन्द्वत्यागात्तु संन्यासान्मत्पूजैव गरीयसी'ति वचनात् । 'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयदि'ति च । 'संन्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः । न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते । तद्भक्तोऽपि हि यद्गच्छेत्तद्गृहस्थो न धार्मिकः । मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते । यदाधिकारो भवति ब्रह्मचार्यपि प्रव्रजेदि'ति नारदीये । 'ब्रह्मचर्यादेव प्रव्रजेत्' । 'यदहरेव विरजेदि'ति च । 'संन्यासे तु तुरीये वै प्रीतिर्मम गरीयसी । येषामत्राधिकारो न तेषां कर्मेति निश्चय' इत्यादेश्च ब्राह्मे । अतो नात्राश्रमः संन्यास उक्तः ॥ संन्यासशब्दार्थमाह । ज्ञेय इति । संन्यासस्य निःश्रेयसकरत्वं ज्ञापयितुं तच्छब्दार्थं स्मारयति । ज्ञेय इति ॥ संन्यासो हि ज्ञानान्तरङ्गत्वेनोक्तो 'न तस्य तत्वग्रहणाये'त्यादौ । अतः कथं सोऽवम इत्यत आह । साङ्ख्ययोगाविति । उभयोरप्यन्तरङ्गत्वेनाविरोधः । 'अग्निमुग्धो ह वै धूमतान्तः स्वं लोकं न प्रतिजानाति' । 'मा वः पद्व्यः पितरस्मदाश्रिता या यज्ञशालासनधूमवर्त्मनामि'त्यादि काम्यकर्मविषयमिति भावः । ये त्वन्यथा वदन्ति ते बालाः ॥ एकमपी-

---

कर्मयोगश्च निःश्रेयसकरावुभौ । तयोस्तु कर्मसन्न्यासात्कर्मयोगो विशिष्यते ॥२॥ ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति । निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥ साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः । एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥४॥



त्यस्याभिप्रायमाह । यत्साङ्ख्यैरिति । योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इत्यर्थः ॥ इतश्च संन्यासाद्योगो वर इत्याह । संन्यासस्त्विति । योगाभावे मोक्षादिफलं न भवति । अतः कामजयादिदुःखमेव तस्य । मोक्षाद्येव हि फलं अन्यत्फलमल्पत्वादफलमेवेत्याशयः । तच्चोक्तं । 'विना मोक्षफलं यत्तु न तत्फलमुदीर्यत' इति पाद्मे । यत्तु महाफलयोग्यं तस्याल्पं फलमेव न भवति । यथा पद्मरागस्य तण्डुलमुष्टिः । महाफलश्च योगयुक्तश्चेत्संन्यास इत्याह । योगयुक्त इति । मुनिः संन्यासी । तच्चोक्तं । 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जित' इति ॥ एतदेव प्रपञ्चयति । योगयुक्त इति । सर्वभूतात्मभूतः परमेश्वरः । यच्चाप्नोतीत्यादेः । स आत्मभूतः स्वस्य समीपं प्रत्यादानादिकर्ता यस्य स सर्वभूतात्मभूतात्मा ॥ संन्यासं स्पष्टयति पुनः श्लोकद्वयेन ॥ संन्यासयोगयुक्त एव च कर्मणा न लिप्यत इत्याह । ब्रह्मणीति । साधननियमस्योपचारत्वनिवृत्त्यर्थं पुनः पुनः फलकथनम् ॥ एवं चाचार इत्याह । कायेनेति ॥ पुनर्युक्त्यादिनियमनार्थं युक्तायुक्तफलमाह । युक्त इति । युक्तो योग-

---

यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते । एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥ सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः । योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥ योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः । सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥७॥ नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् । पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन् ॥८ ॥ प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि । इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥९॥ ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥ कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि । योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥११॥ युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् । अयुक्तः कामकारेण फले सक्तो निबद्ध्यते ॥ १२ ॥

युक्तः ॥ पुनः संन्यासशब्दार्थं स्पष्टयति । सर्वकर्माणीति । मनसेति विशेषणादभिमानत्यागः ॥ न च करोति वस्तुत इत्याह । न कर्तृत्वमिति । प्रभुर्हि जीवो जडमपेक्ष्य ॥ ज्ञानमेवाज्ञाननाशकमित्याह । ज्ञानेनेति । प्रथमज्ञानं परोक्षं । अपरोक्षज्ञानाव्यवहितसाधनमाह । तद्बुद्धय इति । परमेश्वरस्वरूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह । विद्येति ॥ तदेव स्तौति । इहैवेति ॥ संन्यासयोगज्ञानानि मिलित्वा प्रपञ्चयत्यध्यायशेषेण । पुनर्योगस्याधिक्यं स्पष्टयति । बाह्यस्पर्शेष्विति । कामरहितः आत्मनि यत्सुखं विन्दति स एव ब्रह्मयोगयुक्तात्मा चेत्तदेवाक्षयं सुखं विन्दति । ब्रह्मविषयो योगो ब्रह्मयोगः । ध्यानादियुक्तस्यैवात्मसुखमक्षयमन्यथा नेत्यर्थः ॥ संन्यासार्थं कामभोगं निन्दयति । ये हीति ॥ तत्परित्यागं प्रशंसति । शक्नोतीति । कामक्रोधोद्भवं वेगं सोढुं शक्नोति ।

---

सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी । नवद्वारे पुरे देही नैव कुर्वन्नकारयन् ॥ १३ ॥ न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥ नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥ ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥१६॥ तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । गच्छन्त्य पुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥ विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥ इहैव तैर्जितः स्वर्गो येषां साम्ये स्थितं मनः । निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥ न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् । स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥ बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखं । स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥ ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥ शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ॥





शरीरविमोक्षणात्प्राग्यथा मनुष्यशरीरे सोढुं सुशकं तथा नान्यत्रेति भावः । ब्रह्मलोकादिस्तु जितकामानामेव भवति ॥ ज्ञानिलक्षणं प्रपञ्चयत्युत्तरैः श्लोकैः । आरामः परदर्शनादिनिमित्तं सुखं । अत्र तु परमात्मदर्शनादिनिमित्तं तत् । सुखं तूपद्रवक्षये व्यक्तं । अत्र तु कामादिक्षये व्यक्तमात्मसुखं । स्वयं ज्योतिष्ट्वाद्भगवतस्तद्व्यक्तेरन्तर्ज्योतिः । सर्वेषामन्तर्ज्योतिष्ट्वेऽपि व्यक्तेर्विशेषः । असम्प्रज्ञातसमाधीनां बाह्यादर्शनात् । दर्शनेप्यकिञ्चित्करादेवशब्दः । उक्तं चैतत् । 'दर्शनस्पर्शसंभाषाद्यत्सुखं जायते नृणां । आरामः स तु विज्ञेयः सुखं कामक्षयोदितमि'ति नारदीये । 'स्वज्योतिष्ट्वान्महाविष्णोरन्तर्ज्योतिस्तु तत्स्थित' इति च । अन्तः सुखत्वादेः कारणमाह । ब्रह्मणि भूत इति ॥ पापक्षयाच्चैतद्भवतीत्याह । लभन्त इति । क्षीणकल्मषा भूत्वा छिन्नद्वैधायतात्मानः । द्वेधाभावो द्वैधं संशयो विपर्ययो वा । तच्चोक्तं । 'विपर्ययः संशयो वा यद्द्वैधं त्वकृतात्मनां । ज्ञानासिना तु तच्छित्वा मुक्तसङ्गः परं व्रजेदि'ति । छिन्नद्वैधास्त एवाऽयतात्मानो दीर्घमनसः सर्वज्ञा इत्यर्थः । तत एव छिन्नद्वैधाः । तच्चोक्तं । 'क्षीणपापा महाज्ञाना जायन्ते गतसंशया' इति । छिन्नद्वैधाः यतात्मान इति वा ॥ सुलभं च तेषां ब्रह्मेत्याह । कामक्रोधेति । अभितः सर्वतः ॥ ध्यानप्रकारमाह । स्पर्शानित्यादिना । बाह्यान्स्पर्शान्बहिः कृत्वा । श्रोत्रा-

---

कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥ योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः । स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥ लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः । छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥ कामक्रोधवियुक्तानां यतीनां यतचेतसाम् । अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥ स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः । प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥ यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।

दीनि योगेन नियम्येत्यर्थः। चक्षुर्भ्रुवोरन्तरे कृत्वा। भ्रुवोर्मध्यमवलोकयन्नित्यर्थः। उक्तं च। 'नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधापयेदि'ति। प्राणापानौ समौ कृत्वा कुम्भके स्थित्वेत्यर्थः॥ ध्येयमाह। भोक्तारमिति॥ इति श्रीमदानन्दतीर्थभगवत्पदाचार्यविरचिते गीताभाष्ये पञ्चमोऽध्यायः॥ ५॥

ॐ॥ ज्ञानान्तरङ्गं समाधियोगमाहानेनाध्यायेन॥ विवक्षितं संन्यासमाह योगेन सह। अनाश्रित इति। चतुर्थाश्रमिणोऽप्यग्निः क्रिया चोक्ता दैवमेवेत्यादौ। 'अग्निर्ब्रह्म च तत्पूजा क्रिया न्यासाश्रमे स्मृते'ति च। तस्मान्निरग्निरक्रियः संन्यासी योगी च न भवत्येव॥ संन्यासोऽपि योगान्तर्भूत इत्याह। यं संन्यासमिति। कामसङ्कल्पाद्यपरित्यागे कथमुपायवान्स्यादित्याशयः॥ कियत्कालं कर्म कर्तव्यमित्यत आह। आरुरुक्षोर्मुनेरिति। योगमारुरुक्षोः उपायसम्पूर्तिमिच्छोः। योगारूढस्य सम्पूर्णोपायस्य। अपरोक्षज्ञानिन इत्यर्थः। कारणं परमसुखकारणं। अपरोक्षज्ञानिनोऽपि समाध्यादिफलमुक्तं। तस्य सर्वोपशमेन समाधिरेव कारणं प्राधान्येनेत्यर्थः। तथापि यदा भोक्तव्योपरमस्तदैव सम्यगसम्प्रज्ञातसमाधिर्जायते। अन्यदा तु भगवच्चरितादौ स्थितिः। तच्चोक्तं। 'ये त्वां पश्यन्ति भगवंस्त एव

---

विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः॥ २८॥ भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥२९॥
इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे कृष्णार्जुनसंवादे कर्मसन्न्यासयोगो नाम पञ्चमोऽध्यायः॥ ५॥

श्रीभगवानुवाच॥ अनाश्रितः कर्मफलं कार्यं कर्म करोति यः॥ स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः॥ १॥ यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव। न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन॥ २॥ आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव





सुखिनः परं। तेषामेव तु सम्यक्च समाधिर्जायते नृणां। भोक्तव्यकर्मण्यक्षीणे जपेन कथयापि वा॥ वर्तयन्ति महात्मानस्त्वद्भक्तास्त्वत्परायणा' इति॥ योगारूढस्य लक्षणमाह। यदेति। सम्यगननुषङ्गस्तस्यैव भवति। उक्तं च। 'स्वतो दोषलयो दृष्ट्वा त्वितरेषां प्रयत्नत' इति॥ स च योगारोहः प्रयत्नेन कर्तव्य इत्याह। उद्धरेदित्यादिना॥ कस्य बन्धुरात्मेत्याह। बन्धुरात्मेति। आत्मा मनः। आत्मनो जीवस्य आत्मना मनसा। आत्मानं जीवं। आत्मैव मनः। आत्मना बुध्या। जीवेनैव वा। स हि बुध्या विजयति। उक्तं च। 'मनः परं कारणमामनन्ति'। 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः'। 'उद्धरेन्मनसा जीवं न जीवमवसादयेत्। जीवस्य बन्धुः शत्रुश्च मन एव न संशयः'। 'जीवेन बुद्ध्या हि यदात्मनो जितं तदा बन्धुः शत्रुरन्यत्र चास्य। ततो जयेद्बुद्धिबलो नरस्तद्देवे च भक्त्या मधुकैटभाराव'त्यादि ब्रह्मवैवर्ते। अनात्मनः अजितात्मनः पुरुषस्य। अजितमनस्कस्य। सदपि मनोऽनुपकारीत्यनात्मा। सन्नपि भृत्यो यस्य न भृत्यपदे वर्तते स ह्यभृत्यः। तस्यात्मा मन एव शत्रुवच्छत्रुत्वे वर्तते॥ जितात्मनः फलमाह। जितात्मन इति। जितात्मा हि प्रशान्तो भवति। न तस्य मनः प्रायो विषयेषु गच्छति। तदा च परमात्मा सम्यक् हृद्याहितः

---

शमः कारणमुच्यते॥ ३॥ यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते। सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते॥ ४॥ उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत्। आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥ ५॥ बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः। अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत्॥ ६॥ जितात्मनः प्रशान्तस्य परमात्मा समाहितः। शीतोष्णसुखदुःखेषु तथा मानापमानयोः॥ ७॥ ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः। युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः॥८॥

सन्निहितो भवति । अपरोक्षज्ञानी स भवतीत्यर्थः । अपरोक्षज्ञानिनो लक्षणं स्पष्टयति । शीतोष्णेत्यादिना । शीतोष्णादिषु कूटस्थः । ज्ञानविज्ञानतृप्तात्मा विजितेन्द्रिय इति कूटस्थत्वे हेतुः । विज्ञानं विशेषज्ञानं । अपरोक्षज्ञानं वा । तच्चोक्तं । 'सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः । देवादीनां तु तज्ज्ञानं विज्ञानमिति कीर्तितम्' । 'श्रवणान्मननाच्चैव यज्ज्ञानमुपजायते । तज्ज्ञानं दर्शनं विष्णोर्विज्ञानं शम्भुरब्रवीत्' । 'विज्ञानं ज्ञानमज्ञादेर्विशिष्टं दर्शनं तथे'त्यादि । कूटस्थो निर्विकारः । कूटवत्स्थित इति व्युत्पत्तेः । कूटमाकाशः । 'कूटं खं विदलं व्योम संधिराकाश उच्यत'इत्यभिधानात् । योगी योगं कुर्वन् । युक्तो योगसम्पूर्णः एवं भूतो योगानुष्ठाता योगसम्पूर्ण उच्यत इत्यर्थः ॥ स एव च सर्वस्माद्विशिष्यते । साधुपापादिषु समबुद्धिः । जीवचितः परमात्मनः सर्वस्य तन्निमित्तत्वस्य च सर्वत्रैकरूप्येण । चिद्रूपा एव हि



जीवाः । विशेषस्त्वन्तःकरणकृतः । सर्वेषां च साधुत्वादिकं सर्वमीश्वरकृतमेव स्वतो न किञ्चिदपि । उक्तं चैतत्सर्वं । 'स्वतः सर्वेऽपि चिद्रूपाः सर्वदोषविवर्जिताः । जीवास्तेषां तु ये दोषास्त उपाधिकृता मताः । सर्वं चेश्वरतस्तेषां न किञ्चित्स्वत एव तु । समा एव ह्यतः सर्वे वैषम्यं भ्रान्तिसम्भवम् । एवं समानजीवास्तु विशेषो देवतादिषु । स्वाभाविकस्तु नियमाादत एव सनातनः । असुरादेस्तथा दोषा नित्याः स्वाभाविका अपि । गुणदोषौ मनुष्याणां नित्यौ स्वाभाविकौ मतौ । गुणैकमात्ररूपास्तु देवा एव सदा मता'इति ब्राह्मे । न तु साधुपापादीनां पूजादिसाम्यम् । तत्र दोषस्मृतेः । 'समानां विषमा पूजा विषमाणां समा तथा । क्रियते येन देवोऽपि स्वपदाद्भ्रश्यते पुमानि'ति पाद्मे । 'वित्तं बंधुर्वयः कर्म विद्याचैव तु पञ्चमी । एतानि मान्यस्थानानि

---

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु । साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥ योगी युञ्जीत सततमात्मानं रहसि स्थितः । एकाकी



गरीयो ह्युत्तरोत्तरमि'ति वामने । 'गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः । सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति । वैषम्यमुत्तमत्वं तु ददाति नरसञ्चयात् । पूजाया विषमा दृष्टिः समा साम्यं विदुःखजमि'ति ब्रह्मवैवर्ते । सुहृदादिषु शास्त्रोक्तपूजादिकृतिरन्यूनाऽनधिका या साऽपि समा । तदप्याह । 'यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च । तथा करोति पूजादि समबुद्धिः स उच्यत' इति गारुडे । प्रत्युपकारनिरपेक्षयोपकारकृत्सुहृत् । क्लेशस्थानं निरूप्य यो रक्षां करोति स मित्रं । अरिर्वधादिकर्ता । कर्तव्ये उपकारे अपकारे च य उदास्ते स उदासीनः । कर्तव्यमुभयमपि यः करोति स मध्यस्थः । अवासितकृद्द्वेष्यः । आह चैतत् । 'द्वेष्योऽवासितकृत्कार्यमात्रकारी तु मध्यमः । प्रियकृत्प्रियो निरूप्यापि क्लेशं यः परिरक्षति । स मित्रमुपकारं तु ह्यनपेक्ष्योपकारकृत् । यस्ततः स सुहृत्प्रोक्तः शत्रुश्चापि वधादिकृदि'ति ॥ समाधियोगप्रकारमाह । योगी युञ्जीतेत्यादिना । युञ्जीत समाधियोगयुक्तं कुर्यात् । आत्मानं मनः ॥ योगं समाधियोगं युञ्ज्यात् ॥ निर्वाणपरमां शरीरत्यागोत्तरकालीनां ॥ अनशनादिनिषेधोऽशक्तस्य । उक्तं हि 'निद्राशनभयश्वासचेष्टातन्द्र्यादिवर्जनं । कृत्वा

---

यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥ शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥ तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥ समं कायशिरोग्रीवं धारयन्नचलं स्थिरः । सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥ प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः । मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥ युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः । शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥ नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः । न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥ युक्ताहार-

*

निमीलिताक्षस्तु शक्तो ध्यायन्प्रसिध्यती'ति नारदीये ॥ युक्ताहारविहारस्य । सोपायाऽहारादेः । यावता श्रमाद्यभावो भवति तावदाहारादेरित्यर्थः ॥ आत्मनि भगवति ॥ आत्मनो योगं भगवद्विषयं योगं ॥ आत्मना मनसा । आत्मनि देहे । आत्मानं भगवन्तं पश्यन् ॥ तत्त्वतो भगवद्रूपात् ॥ दुःखसंयोगो येन वियुज्यते स दुःखसंयोगवियोगः । न केवलमुत्पन्नं दुःखं नाशयति उत्पत्तिमेव निवारयतीति दर्शयति संयोगशब्देन । निश्चयेन योक्तव्यः योक्तव्य एव बुभूषुणेत्यर्थः ॥ सर्वान् सर्वविषयान् । अशेषतः एकविषयोऽपि कामः स्वल्पः कादाचित्कोऽपि न कर्तव्य इत्यर्थः । मनसैव नियन्तुं शक्यते नान्येनेत्येवशब्दः ॥ बुद्धेः कारणत्वं मनोनिग्रहे आत्मरमणे च ॥ यतो यतः यत्र यत्र । 'यतो यतो धावती'त्यादिप्रयोगात् ।

---

विहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति
दुःखहा ॥ १७ ॥ यदा विनियतं चित्तमात्मन्येवावतिष्ठते । निःस्पृहः
सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥ यथा दीपो निवातस्थो नेङ्गते
सोपमा स्मृता । योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया । यत्र चैवात्मनाऽऽत्मानं पश्य-
न्नात्मनि तुष्यति ॥ २० ॥ सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्वतः ॥ २१ ॥ यं लब्ध्वा चापरं
लाभं मन्यते नाधिकं ततः । यस्मिन्स्थितो न दुःखेन गुरुणाऽपि
विचाल्यते ॥ २२ ॥ तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् । स
निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥ २३ ॥ सङ्कल्पप्रभवान्कामां-
स्त्यक्त्वा सर्वानशेषतः । मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥२४॥
शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया । आत्मसंस्थं मनः कृत्वा न किञ्चि-
दपि चिन्तयेत् ॥ २५ ॥ यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥ प्रशान्तमनसं ह्येनं
योगिनं सुखमुत्तमम् । उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥





आत्मन्येव वशं नयेत् । आत्मविषय एव वशीकुर्यादित्यर्थः ॥ पूर्वश्लोकोक्तं प्रपञ्चयति । एवं युञ्जन्निति ॥ ध्येयमाह । सर्वभूतस्थमिति । सर्वभूतस्थमात्मानं परमेश्वरं । सर्वभूतानि चात्मनि परमेश्वरे । तं च परमेश्वरं ब्रह्मतृणादावैश्वर्यादिना साम्येन पश्यति । तच्चोक्तं । 'आत्मानं सर्वभूतेषु भगवन्तमवस्थितं । अपश्यत्सर्वभूतानि भगवत्यपि चात्मनी'ति । 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरमि'ति च ॥ फलमाह । यो मामिति । तस्याहं न प्रणश्यामीति सर्वदा योगक्षेमवहः स्यामित्यर्थः । स च मे न प्रणश्यति सर्वदा मद्भक्तो भवति । सत्यपि स्वामिन्यरक्षत्यनाथः । एवं भृत्येऽप्यभजत्यभृत्य इति हि प्रसिद्धिः । उक्तं च । 'सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति । अचला तस्य भक्तिः-स्याद्योगक्षेमं वहाम्यहमि'ति गारुडे ॥ एतदेव स्पष्टयति । सर्वभूतस्थितमिति । एकत्वमास्थितः सर्वत्रैक एवेश्वर इति स्थितः । सर्वप्रकारेण वर्तमानोऽपि मय्येव वर्तते । एवमपरोक्षं पश्यतो ज्ञानफलं नियतमित्यर्थः । तथापि प्रायो नाधर्मं करोति । कुर्वतस्तु महच्चेद्दुःखसूचकं भवतीत्युक्तं पुरस्तात् । आह च । 'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत् । प्रमादात्तु कृतं पापं स्वल्पं भस्मीभविष्यति । आदिराजैस्तथादेवैर्ऋषिभिः क्रियते कियत् । बाहुल्यात्कर्मणस्तेषां दुःखसूचकमेव तदि'ति ॥ साम्यं प्रकारान्तरेण व्याचष्टे । आत्मौपम्येनेति ॥

---

युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः । सुखेन ब्रह्मसंस्पर्श-
मत्यन्तं सुखमश्नुते ॥ २८ ॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥ यो मां पश्यति सर्वत्र
सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥
॥ ३० ॥ सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः । सर्वथा वर्त-
मानोऽपि स योगी मयि वर्तते ॥३१॥ आत्मौपम्येन सर्वत्र समं पश्यति
योऽर्जुन । सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥ अर्जुन

एतस्य योगस्य स्थिरां स्थितिं न पश्यामि मनसश्चलत्वात् । उक्तं च । 'मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य वै स्थिरा । विनाऽभ्यासान्न शक्या स्याद्वैराग्याद्वा न संशय' इति व्यासयोगे ॥ न च कदाचित्स्वयमेव मनो नियम्यते । 'शुभेच्छारहितानां च द्वेषिणां च रमापतौ । नास्तिकानां च वै पुंसां सदा मुक्तिर्न जायत' इति निषेधाद्ब्राह्मे ॥ अयतिरप्रयत्नः ॥ योगस्य जिज्ञासुरपि ज्ञातव्यो मया योग इति यस्यातीवेच्छा सोऽपि । शब्दब्रह्मातिवर्तते परं ब्रह्म प्राप्नोतीत्यर्थः ॥ नैकजन्मनीत्याह । प्रयत्नादिति । जिज्ञासुर्ज्ञात्वा प्रयत्नं करोति ।

---

उवाच ॥ योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन । एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥ चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् । तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥ श्रीभगवानुवाच ॥ असंशयं महाबाहो मनो दुर्निग्रहं चलं । अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥ असंयतात्मना योगो दुष्प्राप इति मे मतिः । वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥ अर्जुन उवाच ॥ अयतिः श्रद्धयोपेतो योगाच्चलितमानसः । अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥ कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति । अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥३८॥ एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः । त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥ श्रीभगवानुवाच ॥ पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते । न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥ प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः । शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥ अथवा योगिनामेव कुले भवति धीमताम् । एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥ तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् । यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥ पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः । जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥ प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः । अनेक-





एवमनेकजन्मभिः संसिद्धोऽपरोक्षज्ञानीभूत्वा परां गतिं याति । आह च । 'अतीवश्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः । ज्ञात्वा ध्यात्वा तथा दृष्ट्वा जन्मभिर्बहुभिः पुमान् । विशेन्नारायणं देवं नान्यथा तु कथञ्चने'ति नारदीये ॥ ज्ञानिभ्यो योगज्ञानिभ्यः । तपस्विभ्यः कृच्छ्रादिचारिभ्यः । उक्तं च । 'कृच्छ्रादेरपि यज्ञादेर्ध्यानयोगो विशिष्यते । तत्रापि शेषश्रीब्रह्मशिवादिध्यानतो हरेः । ध्यानं कोटिगुणं प्रोक्तमधिकं वा मुमुक्षुणामि'ति गारुडे । 'अज्ञात्वा ध्यायिनो ध्यानाज्ज्ञानमेव विशिष्यते । ज्ञात्वा ध्यानं ज्ञानमात्राद्ध्यानादपि तु दर्शनं । दर्शनाच्चैव भक्तेश्च न किञ्चित्साधनाधिकमि'ति नारदीये ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

ॐ ॥ साधनं प्राधान्येनोक्तमतीतैरध्यायैः । उत्तरैस्तु षड्भिर्भगवन्माहात्म्यं प्राधान्येनाह ॥ आसक्तमनाः अतीवस्नेहयुक्तमनाः । मदाश्रयः भगवानेव मया सर्वं कारयति । स एव च मे शरणं । तस्मिन्नेव चाहं स्थित इति स्थितः । असंशयं समग्रमिति क्रियाविशेषणं ॥ इदं मद्विषयं ज्ञानं । विज्ञानं विशेषज्ञानं ॥ दौर्लभ्यं

---

जन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥ तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः । कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥ योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे कृष्णार्जुनसंवादे अभ्यासयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

श्रीभगवानुवाच ॥ मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः । असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥ ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः । यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

ज्ञानस्याह । मनुष्याणामिति ॥ प्रतिज्ञातं ज्ञानमाह । भूमिरित्यादिना । महतोऽहंकार एवान्तर्भावः ॥ अपरा अनुत्तमा । वक्ष्यमाणामपेक्ष्य । जीवभूता श्रीः । जीवानां प्राणधारिणी । चिद्रूपभूता सर्वदा सती । एतन्महद्भूतमिति श्रुतिः । जगाद च । 'प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा । अव्यक्ताख्या जडा सा च सृष्टया भिन्नाष्टधा पुनः । महान्बुद्धिर्मनश्चैव पञ्चभूतानि चेति हि । अवरा सा जडा श्रीश्च परेयं धार्यते यया । चिद्रूपा सा त्वनन्ता च अनादिनिधना परा । यत्समं तु प्रियं किञ्चिन्नास्ति विष्णोर्महात्मनः । नारायणस्य महिषी माता सा ब्रह्मणोऽपि हि । ताभ्यामिदं जगत्सर्वं हरिः सृजति भूतराडि'ति नारदीये ॥ न केवलं ते जगत्प्रकृती मद्वशे इत्येतावन्मदैश्वर्यमित्याह । अहमिति । प्रभावादेः सत्ताप्रतीत्यादिकारणत्वात्तद्भोक्तृत्वाच्च प्रभव इत्यादि । तथा च श्रुतिः । 'सर्वकामः सर्वकर्मा सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर' इति । आह च । 'स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता । यतः सर्वस्य तेनाहं सर्वोऽसीत्यृषिभिः स्तुतः । सुखरूपस्य भोक्तृत्वान्न तु सर्वस्वरूपतः । आगामिष्यत्सुखं चापि तच्चास्त्येव सदापि तु । तथाऽप्यचिन्त्यशक्तित्वाज्जातं सुखमतीव चे'ति नारदीये ॥ अहमेव परतरः । मत्तोऽन्यत्परतरं न किञ्चिदपि । इदं ज्ञानं । रसोऽहमिति

---

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥४॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥ एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥ मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥ रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः । प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥ पुण्यो



विज्ञानं ॥ अबादयोऽपि तत एव ॥ तथापि रसादिस्वभावानां साराणां च स्वभावत्वे सारत्वे च विशेषतोऽपि स एव नियामकः । न त्वबादिनियमानुबद्धो रसादिस्तत्सारत्वादिश्चेति दर्शयति । अप्सु रस इत्यादिविशेषशब्दैः । भोगश्च विशेषतो रसादेरिति । उपासनार्थं च । उक्तं च गीताकल्पे । 'रसादीनां रसादित्वे स्वभावत्वे तथैव च । सारत्वे सर्वधर्मेषु विशेषेणापि कारणम् । सारभोक्ता च सर्वत्र यतोऽतो जगदीश्वरः । रसादिमानिनां देहे स सर्वत्र व्यवस्थितः । अबादयः पार्षदा ध्येयः स ज्ञानिनां हरिः । रसादिसम्पत्त्या अन्येषां वासुदेवो जगत्पतिरि'ति । 'स्वभावो जीव एव च' । 'सर्वस्वभावो नियतस्तेनैव किमुतापरम् । न तदस्ति विना यत्स्यान्मया भूतं चराचरमि'ति च । धर्माविरुद्धः कामरागविवर्जितमित्याद्युपासनार्थम् । उक्तं च गीताकल्पे । 'धर्माविरुद्धकामेऽसावुपास्यः काममिच्छता ।  हीने कामरागादेर्बले च बलमिच्छता । ध्यातस्तत्र त्वनिच्छद्भिर्ज्ञानमेव ददाति स' इत्यादि । पुण्यो गन्ध इति भोगापेक्षया च । तथा च श्रुतिः । 'पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति' । 'ऋतं पिबन्तौ सुकृतस्य लोक'इत्यादिका । ऋतं च पुण्यं । 'ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयत'इत्यभिधानात् । 'ऋतं तु मानसो धर्मः सत्यं स्यात्स प्रयोगग' इति च । न चा'नश्नन्नन्यो अभिचाकशीति' । 'अन्यो निरन्नोऽपि बलेन भूयानि'त्यादिविरोधः । स्थूलानशनोक्तेः । आह च सूक्ष्माशनम् । 'प्रविविक्ताहारतर इवैष भवत्यस्माच्छारीरादात्मन' इति । न चात्र जीव उच्यते । शारीरा-

---

गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ । जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥ बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् । बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥ बलं बलवतामस्मि कामरागविवर्जितम् । धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

दात्मन इति भेदाभिधानात् । स्वप्नादिश्च शारीर एव । 'शारीरस्तु त्रिधा भिन्नो जाग्रदादिष्ववस्थितेरि'ति वचनाद्वारुडे । अस्मादितीश्वरव्यावृत्त्यर्थम् । 'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसंज्ञितः । अनादिबन्धनस्त्वेको नित्यमुक्तस्तथाऽपर'इति वचनान्नारदीये । भेदश्रुतेश्च । सति गत्यन्तरे पुरुषभेद एव कल्प्यो न त्ववस्थाभेदः । आह च । 'प्रविविक्तभुग्यतो ह्यस्माच्छारीरात्पुरुषोत्तमः । अतोऽभोक्ता च भोक्ता च स्थूलाभोगात्स एव त्वि'ति गीताकल्पे ॥ न त्वहं तेष्विति तदनाधारत्वमुच्यते । उक्तं च । 'तदाश्रितं जगत्सर्वं नासौ कुत्रचिदाश्रित'इति गीताकल्पे ॥ तर्हि कथमेवं न ज्ञायस इत्यत आह । त्रिभिरिति । तादात्म्यार्थे मयट् । तच्चोक्तं । 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधे'ति । न हि गुणकार्यभूता माया । गुणमयीति च वक्ष्यति । सिद्धं च कार्यस्यापि तादात्म्यं । 'तादात्म्यं कार्यधर्मादेः संयोगो भिन्नवस्तुनोरि'ति व्यासयोगे । भावैः पदार्थैः । सर्वे भावा दृश्यमाना गुणमया एत इति दर्शयति । एभिरिति । ज्ञानिव्यावृत्त्यर्थमिदमिति । गुणमयदेहादिकं दृष्ट्वेश्वरदेहोऽपि तादृश इति मायामोहित इत्यर्थः । जगाद च व्यासयोगे । 'गौणान्ब्रह्मादिदेहादीन्दृष्ट्वा विष्णोरपीदृशः । देहादिरिति मन्वानो मोहितोऽज्ञो जनो भृशमि'ति । एभ्यो गुणमयेभ्यः । 'गुणेभ्यश्च परमि'ति वक्ष्यमाणत्वात् । 'केवलो निर्गुणश्चे'त्यादि श्रुतिभ्यश्च । त्रैगुण्यवर्जितमिति चोक्तम् ॥ कथमनादिकाले मोहानत्ययो बहूनामित्यत आह । दैवीति । अयमाशयः । माया ह्येषा मोहिका । सा च सृष्ट्यादि-

---

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये। मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥ त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥ दैवीह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१४॥



क्रीडादिमद्देवसंबन्धित्वादतिशक्तेर्दुरत्यया । तथा हि देवशब्दार्थं पठन्ति । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्वि'ति । कथं दैवी? मदीयत्वात् अहं हि देव इति । अब्रवीच्च । 'श्रीर्भूर्दुर्गेति या भिन्ना महामाया तु वैष्णवी । तच्छक्त्यनन्तांशहीनाऽथापि तस्याश्रयात्प्रभोः । अनन्तब्रह्मरुद्रादेर्नास्याः शक्तिकलापि हि । तेषां दुरत्ययाप्येषा विना विष्णुप्रसादत' इति व्यासयोगे । तर्हि न कथञ्चिदत्येतुं शक्यत इत्यत आह । मामेवेति । अन्यत्सर्वं परित्यज्य मामेव ये प्रपद्यन्ते । गुर्वादिवन्दनं च मय्येव समर्पयन्ति । स एव च तत्र स्थित्वा गुर्वादिर्भवतीत्यादि पश्यन्ति । आह च नारदीये । 'मत्सम्पत्त्या तु गुर्वादीन्भजन्ते मध्यमा नराः । मदुपाधितया तांश्च सर्वभूतानि चोत्तमा' इति । 'आचार्यचैत्यवपुषा स्वगतिं व्यनङ्क्षि'इति च ॥ तर्हि किमिति सर्वे नात्यायन्नित्यत आह । न मामिति । दुष्कृतित्वान्मूढाः । अतएव नराधमाः । अपहृतज्ञानत्वाच्च मूढाः । अतएवासुरं भावमाश्रिताः । स च वक्ष्यते प्रवृत्तिं च निवृत्तिं चेत्यादिना । अपहारोऽभिभवः । उक्तं चैतद्व्यासयोगे । 'ज्ञानं स्वभावो जीवानां मायया ह्यभिभूयत' इति । असुषु रता असुराः । तच्चोक्तं नारदीये । 'ज्ञानप्रधाना देवास्तु असुरास्तु रता असावि'ति ॥ एकस्मिन्नेव भक्तिरित्येकभक्तिः । तच्चोक्तं गारुडे । 'मय्येव भक्तिर्नान्यत्र एकभक्तिः स उच्यत' इति ॥ बहूनां जन्मना-

---

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः । माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥ चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते। प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥१७॥ उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्। आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८॥ बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।

मन्ते ज्ञानवान्भवति। तच्चोक्तं ब्राह्मे। 'जन्मभिर्बहुभिर्ज्ञात्वा ततो
मां प्रतिपद्यत' इति ॥ प्रकृत्या स्वभावेन। 'स्वभावः प्रकृतिश्चैव
संस्कारो वासनेति चे'त्यभिधानात् ॥ यां यां ब्रह्मादिरूपां तनुं।
उक्तं च नारदीये। 'अन्तो ब्रह्मादिभक्तानां मद्भक्तानामनन्त'तेति।
'मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मक' इत्यादेः परिहारसन्दर्भाच्च
मोक्षधर्मेषु। 'अवतारे महाविष्णोर्भक्तः कुत्र च मुच्यत' इत्यादेश्च
ब्रह्मवैवर्ते ॥ को विशेषस्तवान्येभ्य इत्यत आह। अव्यक्तमिति।
कार्यदेहादिवर्जितम्। तद्वानिव प्रतीयस इत्यत आह। व्यक्तिमापन्न-
मिति। कार्यदेहाद्यापन्नं तच्चोक्तं। 'सदसतः परं'। 'न तस्य
कार्यं'। 'अपाणिपादः'। 'आनन्ददेहं पुरुषं मन्यन्ते गौणदैहिक-
मि'त्यादौ। भावं याथार्थ्यम्। तथाऽब्रवीच्च। 'याथातथ्यमजानन्तः
परं तस्य विमोहिता' इत्यादि ॥ अज्ञानं च मदिच्छयेत्याह। नाह-
मिति। योगेन सामर्थ्योपायेन मायया च। मयैव मूढो नाभि-
जानाति। तथाऽऽह पाद्मे। 'आत्मनः प्रकृतिं चैव लोकचित्तस्य
बन्धनम्। स्वसामर्थ्येन देव्या च कुरुते स महेश्वर' इति ॥ न च



---

वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥ कामैस्तैस्तैर्हृतज्ञानाः
प्रपद्यन्तेऽन्यदेवताः। तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥२०॥
यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति। तस्य तस्याचलां श्रद्धां
तामेव विदधाम्यहम् ॥ २१ ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥ अन्तवत्तु फलं
तेषां तद्भवत्यल्पमेधसाम्। देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि
॥ २३ ॥ अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः। परं भावमजानन्तो
ममाव्ययमनुत्तमम् ॥ २४ ॥ नाहं प्रकाशः सर्वस्य योगमायासमावृतः।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥ वेदाहं सम-
तीतानि वर्तमानानिचार्जुन। भविष्याणि च भूतानि मां तु वेद न



मां माया बध्नातीत्याह। वेदेति। न कश्चनातिसमर्थोऽपि स्वसाम-
र्थ्यात् ॥ द्वन्द्वमोहेन सुखदुःखादि विषयमोहेन। इच्छाद्वेषयोः
प्रवृद्धयोः न हि किञ्चिज्ज्ञातुं शक्यम्। कारणान्तरमेतत्। सर्गे
सर्गकाले आरभ्यैव। शरीरे हि सतीच्छादयः। पूर्वं त्वज्ञानमात्रं ॥
विपरीताश्च केचित्सन्तीत्याह। येषामिति ॥ जरामरणमोक्षायेत्य-
न्यकामनिवृत्त्यर्थं मोक्षे सक्तिस्तुत्यर्थं वा न विधिः। 'मुमुक्षोर-
मुमुक्षुस्तु वरो ह्येकान्तभक्तिभागि'तीतरस्तुतेर्नारदीये। नात्यन्तिक-
मिति च। 'देवानां गुणलिङ्गानामानुस्राविककर्मणां। सत्त्व एवैक-
मनसो वृत्तिः स्वाभाविकी तु या। अनिमित्ता भगवति भक्तिः
सिद्धेर्गरीयसी। जरयत्याशु या कोशं निगीर्णमनलो यथे'ति भागवते
लक्षणाच्च। आह च। 'सर्वे वेदास्तु देवार्था देवा नारायणार्थकाः।
नारायणस्तु मोक्षार्थे मोक्षो नान्यार्थ इष्यते। एवं मध्यमभक्तानामे-
कान्तानां न कस्यचित्। अर्थे नारायणो देवः सर्वमन्यत्तदर्थकमि'ति
गीताकल्पे। त एव च विदुः। 'यमेवैष वृणुत' इति श्रुतेः ॥
॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये सप्तमोऽ-
ध्यायः ॥ ७ ॥ ॥ ॥ ॥ ॥

---

कश्चन ॥ २६ ॥ इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत। सर्वभूतानि
संमोहं सर्गे यान्ति परन्तप ॥ २७ ॥ येषां त्वन्तगतं पापं जनानां पुण्य-
कर्मणाम्। ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥ जरा-
मरणमोक्षाय मामाश्रित्य यतन्ति ये। ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं
कर्म चाखिलम् ॥ २९ ॥ साधिभूताधिदैवं मां साधियज्ञं च ये विदुः।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥ इति श्रीमद्भगवद्गीता-
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ०ज्ञानविज्ञानयोगोनाम सप्तमोऽ-
ध्यायः ॥ ७ ॥

ॐ ॥ मरणकाले कर्तव्यगत्याद्यस्मिन्नध्याय उपदिशति ॥ परममक्षरं ब्रह्म । वेदादिशङ्कानिवृत्त्यर्थमेतत् । आत्मन्यधि यत्तदध्यात्मम् । आत्माधिकारे यत्तदिति वा । तथा हि । जैवः स्वभावः । स्वाख्यो भावः स्वभाव इति व्युत्पत्त्या जीवो वा स्वभावः । सर्वदाऽस्त्येवैकप्रकारेणेति भावः । अन्तःकरणादिव्यावृत्त्यर्थो भावशब्दः । न ह्येकप्रकारेण स्थितिरन्तःकरणादेः । विकारित्वात् । स्वशब्द ईश्वरव्यावृत्त्यर्थः । भूतनां जीवानां भावानां जडपदार्थानां चोद्भवकरेश्वरक्रिया विसर्गः । विशेषेण सर्जनं विसर्ग इत्यर्थः ॥ भूतानि सशरीरान् जीवानधिकृत्य यत्तदधिभूतम् । क्षरो भावः विनाशिकार्यपदार्थः । अव्यक्तान्तर्भावेऽपि तस्याप्यन्यथाभावाख्यो विनाशोऽस्त्येव । तच्चोक्तं । 'अव्यक्तं परमे व्योम्नि निष्क्रिये सम्प्रलीयत' इति । 'तस्माद्व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे'ति च । 'विकारोऽव्यक्तजन्म ही'ति च स्कान्दे । पुरि शयनात्पुरुषो जीवः । स च सङ्कर्षणो ब्रह्मा वा । स सर्वदेवानधिकृत्य वर्तते पतिरित्यधिदैवतम् । देवाधिकारस्थ इति वा । सर्वयज्ञभोक्तृत्वादेरधियज्ञः । अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्ध इति देह इति विशेषणम् । 'भोक्तारं यज्ञतपसां' । 'त्रैविद्या मां' । 'येऽप्यन्यदेवताभक्ताः' । 'एतस्य वा अक्षरस्य प्रशासने गार्गि' । 'ददतो मनुष्याः प्रशंसन्ति यजमानं देवा' इत्यादेः । 'कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैश्रेयसं पदमि'त्यादिपरिहाराच्च मोक्षधर्मे । भगवांश्चेत्तद्भोक्तृत्वादेरधियज्ञत्वं सिद्धमिति

---

अर्जुन उवाच ॥ किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम । अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥ अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन । प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥ श्रीभगवानुवाच ॥ अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते । भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥ अधिभूतं क्षरो भावः पुरुषश्चाधि-





कथमित्यस्य परिहारः पृथङ्नोक्तः । सर्वप्राणिदेहस्थरूपेणाधियज्ञः । अत्रेति स्वदेहनिवृत्त्यर्थम् । न हि तत्रेश्वरस्य नियन्तृत्वं पृथगस्ति । नात्रोक्तं ब्रह्म भगवतोऽन्यत् । ते ब्रह्मेत्युक्त्वा साधिभूताधिदैवं मां साधियज्ञं च ये विदुरिति परामर्शात् । तस्यैव च प्रश्नात् । साधियज्ञमिति भेदप्रतीतेस्तन्निवृत्त्यर्थमधियज्ञोऽहमित्युक्तं । मामित्यभेदसिद्धेरक्षरमित्येवोक्तं । आह च गीताकल्पे । 'देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः । कर्मेश्वरस्य सृष्टयाख्यं तच्चापीच्छाद्यमुच्यते । अधिभूतं जडं प्रोक्तमध्यात्मं जीव उच्यते । हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि वा । ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वर' इति । 'यथाप्रतीतं वा सर्वमत्र नैव विरुद्ध्यत' इति । स्कान्दे च । 'आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते । देहाद्बाह्यं विनातीव बाह्यत्वादधिदैवतम् । देवाधिकारगं सर्वं महाभूताधिकारगम् । तत्कारणं तथा कार्यमधिभूतं तदन्तिकादि'ति । महाकौर्मे च । 'अध्यात्मं देहपर्यन्तं केवलात्मोपकारकम् । सदेहजीवभूतानि यत्तेषामुपकारकृत् । अधिभूतं तु मायान्तं देवानामधिदैवतमि'ति ॥ मद्भावं मयि सत्ताम् । निर्दुःखनिरतिशयानन्दात्मिकाम् । तच्चोक्तं । 'मुक्तानां च गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्पित' इति मोक्षधर्मे ॥ स्मरन्पुरुषस्त्यजतीति भिन्नकालीनत्वेऽप्यविरोध इति मन्दमतेः शङ्का मा भूदित्यन्तइति विशेषणम् । सुमतेर्नैव शङ्काऽवकाशः । स्मरंस्त्यजतीत्येककालीनत्वप्रतीतेः । दुर्मतेर्दुःखान्न स्मरंस्त्यजतीति भविष्यति शङ्का । 'त्यजन्देहं न कश्चित्तु मोहमाप्नोत्यसंशयमि'ति स्कान्दे । 'तस्य हैतस्य हृदय-

---

दैवतं । अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥ अन्तकाले च मामेव स्मरन्मुक्त्वा कलेबरं । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥ यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेबरं । तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥ तस्मात्सर्वेषु कालेषु मामनुस्मर

स्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामती'ति हि श्रुतिः। सदा तद्भावभावित इत्यन्तकाले स्मरणोपायमाह । भावोन्तर्गतं मनः। तथाऽभिधानात् । भावितत्वमतिवासितत्वम् । 'भावनात्वतिवासने' त्यभिधानात्॥ सदा तद्भावभावितत्वं स्पष्टयति। अभ्यासेति। अभ्यास एव योगोऽभ्यासयोगः। दिव्यं पुरुषं पुरिशयं पूर्णं च। 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृत-मि'ति श्रुतेः। दिव्यं सृष्ट्यादिक्रीडायुक्तम्। दिवु क्रीडेतिधातोः॥ ध्येयमाह। कविमिति। कविं सर्वज्ञम्। 'यः सर्वज्ञ इति श्रुतिः। 'त्वं कविः सर्ववेदनादि'ति ब्राह्मे। धातारं धारणपोषणकर्तारम्। डु धाञ् धारणपोषणयोरिति धातोः। 'धाता विधाता परमोतसंदृगि'ति च श्रुतिः। ब्रह्मा स्थाणुरित्यारभ्य 'तस्य प्रसादादिच्छन्ति तदादिष्ट-फलां गतिमि'त्यादि च मोक्षधर्मे। तमसोऽव्यक्तात्परतः स्थितम्। 'तमसः परस्तादि'ति। 'अव्यक्तं वै तमः परस्ताद्धि स तत' इति पिप्पलादशाखायाम्। मृत्युर्वा व तमः 'मृत्युर्वै तमो ज्योतिरमृत-मि'ति श्रुतेः॥ वायुजयादियोगयुक्तानां मृतिकाले कर्तव्यमाह विशेषतः प्रयाणकाल इति। वायुजयादिरहितानामपि ज्ञानभक्ति-वैराग्यादिसम्पूर्णानां भवत्येव मुक्तिः। तद्वतां त्वीषज्ज्ञानाद्यसम्पूर्णाना-मपि निपुणानां तद्बलात्कथञ्चिद्भवतीति विशेषः। उक्तं च भागवते। 'पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये। वैराग्य-सारं प्रतिलभ्य बोधं यथाञ्जसा त्वाऽपुरकुण्ठधिष्ण्यम्। तथा परे

---

युध्य च। मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम्॥ ७॥ अभ्यासयोग युक्तेन चेतसाऽनन्यगामिना। परमं पुरुषं दिव्यं याति पार्थानु-चिन्तयन्॥ ८॥ कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः॥ सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात्॥ ९॥ प्रयाण-काले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव। भ्रुवोर्मध्ये प्राण-





त्वात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम्। त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया त' इति। 'ये तु तद्भाविता लोक एकान्तित्वं समाश्रिताः। एतदभ्यधिकं तेषां तत्तेजः प्रविशन्त्यु-ते'ति च मोक्षधर्मे। 'सम्पूर्णानां भवेन्मोक्षो विरक्तिज्ञानभक्तिभिः। नियमेन तथापीरजयादियुतयोगिनाम्। वश्यत्वान्मनसस्त्वीषत्पूर्व-मप्याप्यते ध्रुवमि'ति व्यासयोगे॥ तदेव सध्येयं प्रपञ्चयति। यदक्षरमित्यादिना। प्राप्यते मुमुक्षुभिरिति पदं स्वरूपम्। पद गताविति धातोः। 'तद्विष्णोः परमं पदमि'ति श्रुतेश्च। 'गीयसे पदमित्येव मुनिभिः पद्यसे यत' इति च नारदीये॥ ब्रह्मनाडीं विना यद्यन्यत्र गच्छति तर्हि विना मोक्षं स्थानान्तरं प्राप्नोतीति सर्वद्वाराणि संयम्य। 'निर्गच्छंश्चक्षुषा सूर्यं दिशः श्रोत्रेण चैव ही'त्यादिवचना-द्व्यासयोगे। मोक्षधर्मे च। हृदि नारायणे। 'ह्रियते त्वया जग-द्यस्माद्धृदित्येवं प्रभाषस' इति पाद्मे। न हि मूर्ध्नि प्राणो हृदि मनसः स्थितिः सम्भवति। 'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथे'ति व्यासयोगे। योगधारणामास्थितः। योगभरण एवाभियुक्त इत्यर्थः॥ नित्ययुक्तस्य नित्योपायवतः। योगिनः परिपूर्णयोगस्य॥ तत्प्राप्तिं स्तौति। मामिति। परमां सिद्धिं गता हि त इति तत्र हेतुः॥

---

मावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यं॥ १०॥ यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये॥ ११॥ सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च। मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम्॥ १२॥ ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्। यः प्रयाति त्यजन्देहं स याति परमां गतिम्॥ १३॥ अनन्यचेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥ १४॥ मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां

महामेरुस्थब्रह्मसदनमारभ्य न पुनरावृत्तिः। तच्चोक्तं नारायणगोपालकल्पे। 'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि। तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजमि'ति ॥ मां प्राप्य न पुनरावृत्तिरिति स्थापयितुमव्यक्ताख्यात्मसामर्थ्यं दर्शयितुं प्रलयादि दर्शयति। सहस्रयुगेत्यादिना। सहस्रशब्दोऽत्रानेकवाची। 'सा विश्वरूपस्य रजनी'ति श्रुतिः ॥ द्विपरार्धप्रलय एवात्र विवक्षितः। 'अव्यक्ताद्व्यक्तयः सर्वा' इत्युक्तेः। उक्तं च महाकौर्मे। 'अनेकयुगपर्यन्तमहर्विष्णोस्तथा निशा। रात्र्यादौ लीयते सर्वमहरादौ च जायत' इति। 'यः सर्वेषु भूतेष्वि'ति वाक्यशेषाच्च ॥ अव्यक्तो भगवान्। यं प्राप्य न निवर्तन्त इति मामुपेत्येत्युक्तस्य परामर्शात्। 'अव्यक्तं परमं विष्णुमि'ति प्रयोगाच्च गारुडे। धाम स्वरूपम्। 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयत' इत्यभिधानात् ॥ परमसाधनमाह। पुरुष इति ॥ यत्कालाद्यभिमानिदेवतागता आवृत्त्यनावृत्ती गच्छन्ति ता आह। यत्रेत्यादिना। काल इत्युपलक्षणम्। अग्न्यादेरपि वक्ष्यमाणत्वात् ॥ ज्योतिरर्चिः। 'तेऽर्चिषमभि-

---

गताः ॥ १५ ॥ आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥ सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः। रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥ अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे। रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥ भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते। रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥१९॥ परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः। यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥ अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥ यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥ अग्निर्ज्योतिरहः





सम्भवन्ती'ति हि श्रुतिः। तथा च नारदीये। 'अग्निं प्राप्य ततश्चार्चिस्ततश्चाप्यहरादिकमि'ति। अभिमानिदेवताश्चाग्न्यादयः। कथमन्यथा अह्न आपूर्यमाणपक्षमिति युज्यते? 'दिवादिदेवताभिस्तु पूजितो ब्रह्म याति ही'ति च ब्राह्मे। मासाभिमानिभ्योऽयनाभिमानी च पृथक्। तच्चोक्तं गारुडे। 'पूजितस्त्वयनेनासौ मासैः परिवृतेन ही'ति। अहरभिजिता शुक्लपौर्णमास्या अयनं विषुवा सह ॥ तच्चोक्तं ब्रह्मवैवर्ते। 'साह्ना मध्यंदिनेनाथ शुक्लेन च सपूर्णिमा। सविषुवा चायनेनासौ पूजितः केशवं व्रजेदि'ति ॥ एते सृती सोपाये ज्ञात्वाऽनुष्ठाय न मुह्यति। तच्चाह स्कान्दे। 'सृती ज्ञात्वा तु सोपाये अनुष्ठाय च साधनम्। न कश्चिन्मोहमाप्नोति नचान्या तत्र वै गतिरि'ति ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये अष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

ॐ ॥ सप्तमाध्यायोक्तं स्पष्टयत्यस्मिन्नध्याये ॥ राजविद्या प्रधानविद्या। प्रत्यक्षं ब्रह्मावगम्यते येन तत्प्रत्यक्षावगमम्। अक्षेष्विन्द्रियेषु प्रति प्रति स्थित इति प्रत्यक्षः। तथाच श्रुतिः। 'यः प्राणे

---

शुक्लः षण्मासा उत्तरायणं। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ २६ ॥ नैते सृती पार्थ जानन्योगी मुह्यति कश्चन। तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥ वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम्। अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥ इति श्रीमद्भगवद्गीता०अक्षरपरब्रह्मयोगोनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीभगवानुवाच ॥ इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे। ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥ राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्। प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

तिष्ठन्प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः’ । ‘यो वाचि तिष्ठन्यश्चक्षुषि तिष्ठन्नि’त्यादेः । ‘य एषोऽन्तरक्षिणि पुरुषो दृश्यत’ इति च । ‘अंगुष्ठमात्रः पुरुषोंऽगुष्ठं च समाश्रित’ इति च । ‘त्वं मनस्त्वं चन्द्रमास्त्वं चक्षुरादित्य’ इत्यादेश्च मोक्षधर्मे । ‘स प्रत्यक्षः प्रति प्रति हि सोऽक्षेष्वक्षवान्हि स भवति य एवं विद्वान्प्रत्यक्षं वेदे’ति सामवेदे वारुणशाखायां । धर्मो भगवान् तद्विषयं धर्म्यम् । सर्वं जगद्धत्त इति धर्मः । ‘पृथिवी धर्ममूर्धनी’ति प्रयोगान्मोक्षधर्मे । ‘भारभृत्कथितो योगी’ति च । ‘भर्ता सन् भ्रियमाणो बिभर्तीति च श्रुतिः । ‘धर्मो वा इदमग्र आसीन्न पृथिवी न वायुर्नाकाशो न ब्रह्मा न रुद्रो न देवा न ऋषयः सोऽध्यापयदि’ति च सामवेदे बाभ्रव्यशाखायाम् । प्रत्यक्षावगमशब्देनापरोक्षज्ञानसाधनत्वमुक्तम् ॥ तज्ज्ञानाद्याह । मयेति । तर्हि किमिति न दृश्यत इत्यत आह । अव्यक्तमूर्तिनेति ॥ मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्टा स्थितानि न तथा मयीत्याह । न चेति । ‘न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन चे’ति हि मोक्षधर्मे । संज्ञासंज्ञ इति च । ममात्मा देह एव भूतभावनः । ‘महाविभूतो माहात्म्यशरीर’ इति हि मोक्षधर्मे ॥ मत्स्थानि न च मत्स्थानीत्यस्य दृष्टान्तमाह । यथाऽकाशस्थित इति । न ह्याकाशस्थितो वायुः स्पर्शाद्याप्नोति ॥ ज्ञानप्रदर्शनार्थं प्रलयादि प्रपञ्चयति ।

---

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप । अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥ मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥ न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् । भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥ यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् । तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥ सर्वभूतानि कौन्तेय प्रकृतिं यान्ति



सर्वभूतानीत्यादिना । प्रकृत्यवष्टम्भस्तु यथा कश्चित्समर्थोऽपि पादेन गन्तुं लीलया दंडमवष्टभ्य गच्छति । ‘सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसी’ति मोक्षधर्मे । ‘सर्वभूतगुणैर्युक्तं दैवं मां ज्ञातुमर्हसी’ति च । विदित्वा सप्तसूक्ष्माणि षडङ्गं च महेश्वरम् । प्रधानविनियोगस्थः परं ब्रह्माधिगच्छती’ति च । ‘न कुत्रचिच्छक्तिरनन्तरूपा विहन्यते तस्य महेश्वरस्य । तथापि मायामधिरुह्य देवः प्रवर्तते सृष्टिविलापनेष्वि’तृग्वेदखिलेषु । ‘मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रह’ इति भागवते । ‘अथ कस्मादुच्यते परं ब्रह्म बृहति बृंहयति चे’त्यथर्वणे । ‘पराऽस्य शक्तिर्विविधैव श्रूयत’ इति च । ‘विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमापे’त्यादेश्च । प्रकृतेर्वशादवशं । ‘त्वमेवैतत्सर्जने सर्वकर्मण्यनन्तशक्तोऽपि स्वमाययैव । मायावशं चावशं लोकमेतत्तस्मात्स्रक्ष्यस्यत्सि पासीश विष्णो’ इति गौतमखिलेषु ॥ उदासीनवन्नतूदासीनः । तदर्थमाह । असक्तमिति । ‘अवाक्यनादर’ इति हि श्रुतिः । ‘द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये’ति भागवते । यस्यासक्त्यैव सर्वकर्मशक्तिः कुतस्तस्य सर्वकर्मबन्ध इति भावः । ‘न कर्मणा वर्धते नो कनीयानि’ति हि श्रुतिः । यः कर्मापि नियामयति कथं च तत्तं बध्नाति ? ॥ उदसीनवदिति चेत्स्वयमेव प्रकृतिः सूयत इत्यत आह । मयेति । प्रकृतिसूतिद्रष्टा कर्ताहमेवेत्यर्थः । तथा च श्रुतिः । ‘यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्यामि’ति ॥ तर्हि

---

मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥ न च मां तानि कर्माणि निबध्नन्ति धनञ्जय । उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥ मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥ अवजानन्ति मां

केचित्कथं त्वामवजानन्ति ? । का च तेषां गतिरित्यत आह । अवजानन्तीत्यादिना । मानुषीं तनुं मूढानां मानुषवत्प्रतीतां न तु मनुष्यरूपां । उक्तं च मोक्षधर्मे । 'यत्किञ्चिदिह लोके वै देहबद्धं विशां पते । सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः । ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् । भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च । भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तमे'ति । अवतार-प्रसङ्गे चैतदुक्तं । अतो नावताराश्च पृथक्शङ्क्याः । 'रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय सः । वाराहं नारसिंहं च वामनं मानुषं तथे'ति तत्रैव प्रथमसर्गकाल एवावताररूपविभक्त्युक्तेः । अतो न तेषां मानुषत्वादिर्विना भ्रान्तिम् । भूतं महदीश्वरं चेति भूतमहेश्वरम् । तथा हि बाभ्रव्यशाखायाम् । 'अनाद्यनन्तं परिपूर्णरूपमीशं वराणामपि देववीर्यमि'ति । 'अस्य महतो भूतस्य निःश्वसितमि'ति च । 'ब्रह्मपुरोहित ब्रह्मकायिक महाराजिके'ति च मोक्षधर्मे ॥ तेषां फलमाह । मोघाशा इति । वृथाशाः । भगवद्द्वेषिभिराशासितमामुष्मिकं न किञ्चिदाप्यते । यज्ञादिकर्माणि च तेषां वृथैव । ज्ञानं च केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित्पुरुषार्थ आमुष्मिकस्तैराप्यत इत्यर्थः । वक्ष्यति च । 'तानहं द्विषतः क्रूरान्संसारेष्वि'त्यादि । मोक्षधर्मे च । 'कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः । यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् । कथं स न भवेद्द्वेष्य आलोकान्तस्य कस्यचिदि'ति । 'सर्वोत्कृष्टे ज्ञानभक्ती हि यस्य नारायणे पुष्करविष्टराद्ये । सर्वावमो द्वेषयुतश्च तस्मिन्भ्रूणानन्तघ्नोऽप्यस्य समो न चैवे'ति सामवेदे शाण्डिल्यशाखायाम् । 'द्वेषाच्चैद्यादयो नृपाः' । 'वैरेण यन्नृपतयः शिशुपाल-

मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं





पौण्ड्रसाल्वादयो गतिविलासविलोकनाद्यैः । ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमीयुरनुरक्तधियः पुनः किमि'त्यादि तु भगवतो भक्तप्रियत्वज्ञापनार्थं । नित्यध्यानस्तुत्यर्थं च । स्वभक्तस्य कदाचिच्छापबलाद्द्वेषिणोऽपि भक्तिफलमेव भगवान्ददातीति । भक्ता एव हि ते पूर्वं शिशुपालादयः शापबलादेव द्वेषिणः । तत्प्रश्ने पूर्वपार्षदत्वशापादिकथनाच्चैतज्ज्ञायते । अन्यथा किमिति तदप्रस्तुतमुच्यते ? । भगवतः साम्यकथनं तु द्वेषिणामपि द्वेषमनिरूप्य पूर्वतनभक्तिफलमेव ददातीति ज्ञापयितुम् । 'न मे भक्तः प्रणश्यती'ति वक्ष्यति । न च भावो भवकरणमित्यादिविरोधः । द्वेषभाविनां द्वेष एव भवतीति हि युक्तम् । अन्यथा गुरुद्वेषिणोऽपि गुरुत्वं भवतीत्याद्यनिष्टमापद्यते । न चाकृतधीत्वे विशेषः । तेषामेव हिरण्यकशिप्वादीनां पापप्रतीतेः । 'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः । विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावत' इति । 'यदनिन्दत्पिता मह्यं(मे त्वां) त्वद्भक्ते मयि चाघवानि'त्यारभ्य 'तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघादि'ति प्रह्लादेन भगवतो वरयाचनाच्च । बहुषु ग्रन्थेषु निषेधः । कुत्रचिदेव तदुक्तिरिति विशेषः । यस्मिंस्तदुच्यते तत्रैव च निषेध उक्तः । महातात्पर्यविरोधश्चोक्तः पुरस्तात् । अयुक्तिमद्वचो युक्तिमन्त्येव बलवन्ति वाक्यानि । युक्तयश्चोक्ता अन्येषां । न चैतेषां काचिद्गतिः । साम्येऽपि वाक्ययोर्लोकानुकूलमेव बलवत् । लोकानुकूलं च भक्तप्रियत्वं नेतरत् । उक्तं च तेषां पूर्वभक्तत्वम् । 'मन्येऽसुरान्भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तानि'त्यादि । अतो न भगवद्द्वेषिणां काचिद्गतिरिति सिद्धम् । द्वेषकारणमाह । राक्षसीमिति ॥ नेतरे द्विषन्तीति दर्शयितुं देवानाह । महात्मान इत्यादिना ॥

चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥ सततं

सर्वत्रैक एव नारायणः स्थित इत्येकत्वेन । पृथक्त्वेन । सर्वतो वैलक्षण्येन । 'बहुधा हि तस्यरूपमाभाति । शुक्लमिव लोहितमिवाथो नीलमथार्जुनमि'ति हि सनत्सुजाते । दैवमेवापर इत्युक्तप्रकारेण बहवो वा बहुधा ॥ प्रतिज्ञातं विज्ञानमाह । अहं क्रतुरित्यादिना । क्रतवोऽग्निष्टोमादयः । यज्ञो देवतामुद्दिश्य द्रव्यत्यागः । 'उद्दिश्य देवान्द्रव्याणां त्यागो यज्ञ इतीरित' इत्यभिधानात् ॥ गम्यते मुमुक्षुभिरिति गतिः । तथा हि सामवेदे वासिष्ठशाखायाम् । 'अथ कस्मादुच्यते गतिरिति ? । ब्रह्मैव गतिस्तद्धि गम्यते पापविमुक्तै'-रिति । साक्षादीक्षत इति साक्षी । तथाहि बाष्कलशाखायां । 'स साक्षादिदमद्राक्षीद्यदद्राक्षीत्तत्साक्षिणः साक्षित्वमि'ति । शरणमाश्रयः संसारभीतस्य । परमं यः परायणमिति ह्युक्तम् । 'नारायणं महाज्ञेयं विश्वात्मानं परायणमि'ति च । संहारकाले प्रकृत्या जगदत्र निधीयत इति निधानम् । तथा ह्यृग्वेदखिलेषु । 'अपश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुरि'ति । सत्कार्यं असत्कारणम् । 'सदभिव्यक्तरूपत्वात्कार्यमित्युच्यते बुधैः । असदव्यक्तरूपत्वात्कारणं चापि शब्दितमि'त्यभिधानात् । 'असच्च सच्चैव च यद्विश्वं सदसतः परमि'ति च भारते ॥ तथापि मद्भजनमेवान्यदेवताभजनाद्वरमिति

---

कीर्तयन्तो मां यतन्तश्च दृढव्रताः । नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥ ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते । एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् ॥ १५ ॥ अहं क्रतुरहं यज्ञः स्वधाऽह-महमौषधम् । मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥ पिताऽह-मस्य जगतो माता धाता पितामहः । वेद्यं पवित्रमोंकार ऋक्सामयजु-रेव च ॥ १७ ॥ गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् । प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥ तपाम्यहमहं वर्षं निगृह्णा-म्युत्सृजामि च । अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥ त्रैविद्या





दर्शयति । त्रैविद्या इत्यादिना ॥ अनन्याः अन्यदचिन्तयित्वा । तथा हि गौतमखिलेषु । 'सर्वं परित्यज्य मनोगतं यद्विना देवं केवलं शुद्धमाद्यं । ये चिन्तयन्तीह तमेव धीरा अनन्यास्ते देवमेवाविशन्ती'ति । 'कामं लोकेन(कालेन)महता एकान्तित्वात्समाहितैः । शक्यो द्रष्टुं स भगवान्प्रभासन्दृश्यमण्डल' इति मोक्षधर्मे । नित्यमभितः सर्वतो युक्तानाम् ॥ तर्ह्यहं क्रतुरित्याद्यसत्यमित्यत आह । येऽपीति ॥ कारणमाहाविधिपूर्वकत्वे । अहं हीति ॥ फलं विविच्याह । यान्तीति ॥ दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वादित्याशङ्क्याह । पत्रमिति । न त्वविहितपत्रादि । तस्यापराधत्वोक्तेर्वाराहादौ । भक्त्यैवाहं तुष्ट इति भावः । 'भक्तिप्रियं सकललोकनमस्कृतं चे'ति भारते । 'एतावानेव लोकेऽस्मिन्पुंसः स्वार्थः परः स्मृतः । एकान्तभक्तिर्गोविन्दे यत्सर्वत्रात्म-दर्शनम्' ॥ अतो यत्करोषि ॥ तर्हि स्नेहादिमत्वादल्पभक्तस्यापि कस्यचिद्बहुफलं ददासि । विपरीतस्यापि कस्यचिद्विपरीतमित्यत आह ।

---

मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥ २० ॥ ते तं भुक्त्वा स्वर्ग-लोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति । एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥२१॥ अनन्याश्चिन्तयन्तो मां ये जनाः पर्यु-पासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥ येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥२३॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥ यान्ति देवव्रता देवान् पितृन्यान्ति पितृ-व्रताः । भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रय-तात्मनः ॥ २६ ॥ यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्त-पस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥ शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः । संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥ समोऽहं

समोऽहमिति। तर्हि न भक्तिः प्रयोजनमित्यत आह। ये भजन्तीति। 'मयि ते तेषु चाप्यहमि'ति मम ते वशास्तेषामहं वश इति। उक्तं च पैङ्गिखिलेषु। 'ये वै भजन्ते परमं पुमांसं तेषां वशः स तु ते तद्वशाश्चे'ति। तद्वशा एव ते सर्वे सर्वदा। तथापि बुद्धिपूर्वकत्वाबुद्धिपूर्वकत्वेन भेदः। उद्धवादिवच्छिशुपालादिवच्च। तच्चोक्तं तत्रैव। 'अबुद्धिपूर्वं योऽवशस्तस्य ध्यानात्पुनर्वशो भवते बुद्धिपूर्वमि'ति॥ न भवत्येव प्रायस्तद्भक्तो दुराचारस्तथापि बहुपुण्येन यदि कथञ्चिद्भवति तर्हि स साधुरेव मन्तव्यः॥ कुतः? क्षिप्रं भवति धर्मात्मा। देवदेवांशादिष्वेवं चैतद्भवति। उक्तं च शाण्डिल्यशाखायाम्। 'नाविरतो दुश्चरितान्नाभक्तो नासमाहितः। सम्यग्भक्तो भवेत्कश्चिद्वासुदेवेऽमलाशयः। देवर्षयस्तदंशाश्च भवन्ति क्व च ज्ञानत' इति। अतोऽन्यः कश्चिद्भवति चेद्दाम्भिकत्वेन सोऽनुमेयः। साधारणपापानां तु सत्सङ्गान्महत्या कथञ्चिद्भक्तिर्भवति। साधारणभक्तिर्वेतरेषाम्। 'स शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवेहि नास्य भक्तमि'ति हि श्रीविष्णुपुराणे। 'सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसामि'ति च। 'वेदास्त्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम्। पूजां गुरूणां सततं करोमि परस्य गुह्यं न च भिन्नपूर्वम्। गुप्तानि चत्वारि यथागमं मे शत्रौ च मित्रे च समोऽस्मि नित्यम्। तं चापि देवं शरणं प्रपन्न एकान्तभावेन भजाम्यजस्रम्। एतैर्विशेषैः परिशुद्धसत्त्वः

---

सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥ अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥ क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति। कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥ मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥ किं पुनर्ब्राह्मणाः पुण्या



कस्मान्न पश्येयमनन्तमेनमि'ति मोक्षधर्मे आचारस्य च साधनत्वोक्तेश्च। ज्ञानाभावे च सम्यग्भक्त्यभावात्। तथा हि गौतमखिलेषु। 'विना ज्ञानं कुतो भक्तिः कुतो भक्तिं विना च तदि'ति। 'भक्तिः परेस्वानुभवो विरक्तिरन्यत्र चैतत् त्रिकमेककालमि'ति भागवते॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये नवमोऽध्यायः ९॥

ॐ॥ उपासनार्थं विभूतीर्विशेषकारणत्वं च केषाञ्चिदनेनाध्यायेनाह॥ प्रीयमाणाय। श्रुत्वा सन्तोषं प्राप्नुवते॥ प्रभवं प्रभावम्। मदीयां जगदुत्पत्तिं वा। तद्वशत्वात्तस्येत्युच्यते। यद्यस्ति तर्हि देवादयो जानन्ति सर्वज्ञत्वादतो नास्तीति भावः। 'अहमादिर्ही'ति तूत्पत्तिरपि यस्य वशा कुतस्तस्य जनिरिति ज्ञापनार्थम्। 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथे'ति चोक्तम्। उक्तं चैतत्सर्वमन्यत्रापि। 'को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः। अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूवे'ति। 'न तत्प्रभावमृषयश्च देवा विदुः कुतोऽन्येऽल्पधृतिप्रमाणा'इत्यृग्वेदखिलेषु। अन्यस्त्वर्थो 'योमामजमि'ति वाक्यादेव ज्ञायते॥ अनश्चेष्टयिता सर्वस्येत्यनादिः। अजत्वेन सिद्धेरितरस्य॥ तत्प्रथयति। बुद्धिरित्यादिना। कार्याकार्यविनिश्चयो

---

भक्ता राजर्षयस्तथा। अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ०राजविद्याराजगुह्ययोगोनाम नवमोऽध्यायः ॥ ९ ॥ ॥ ॥ ॥

श्रीभगवानुवाच ॥ भूय एव महाबाहो शृणु मे परमं वचः। यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥ न मे विदुः सुरगणाः प्रभवं न महर्षयः। अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥ यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥ बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः। सुखं दुःखं

बुद्धिः । ज्ञानं प्रतीतिः । 'ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यविनिर्णय' इत्यभिधानं । दम इन्द्रियनिग्रहः । शमः परमात्मनिष्ठता 'शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रह' इति भागवते ॥ तुष्टिरलम्बुद्धिः । 'अलम्बुद्धिस्तथा तुष्टिरि'त्यभिधानात् ॥ पूर्वे सप्तर्षयः । 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजा' इति मोक्षधर्मोक्ताः । ते हि सर्व पुराणेषूच्यन्ते । चत्वारः प्रथमाः स्वायम्भुवाद्याः । तेषां हीमाः प्रजाः न हि भविष्यतामिमाः प्रजा इति युक्तम् । विभागः प्राधान्यं च प्राथमिकत्वादेव भवति । गौतमखिलेषु चोक्तम् । 'स्वायम्भुवं रोचिषं च रैवतं च तथोत्तमम् । वेद यः स प्रजावानि'ति । पूर्वेभ्यो ह्युत्तरा जायन्त इति च तेषां प्राधान्यम् । अजातेषु च ज्यैष्ठ्यम् । तापसस्य भगवदवतारत्वादनुक्तिः । तच्च भागवते प्रसिद्धम् । मानसत्वं च सर्वेषां मनूनामुक्तं भागवते । 'ततो मनून्ससर्जान्ते मनसा लोकभावनानि'ति । अन्यपुत्रत्वं त्वपरित्यज्यापि शरीरं तद्भवति । प्रमाणं चोभयविधवाक्यान्यथानुपपत्तिरेव । पूर्व इति विशेषणाच्चैतत्सिद्धिः । मत्तो भावो येषां ते मद्भावाः । (ये) एते ब्रह्मणो मनसा जातास्ते मत्त एव जाता इति भावः ॥ सन्ति च भजन्तः केचिदित्याह । अहमित्यादिना ॥ ब्रह्म

---

भवो भावो भयं चाभयमेव च ॥ ४ ॥ अहिंसा समता तुष्टिस्तपो दानं
यशोऽयशः । भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥ महर्षयः
सप्त पूर्वे चत्वारो मनवस्तथा । मद्भावा मानसा जाता एषां लोक इमाः
प्रजाः ॥६॥ एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः । सोऽविकम्पेन
योगेन युज्यते नात्र संशयः ॥७॥ अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥ मच्चित्ता मद्गतप्राणा
बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ९॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मा-
मुपयान्ति ते ॥ १० ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्या-



परिपूर्णम् । 'अथ कस्मादुच्यते परं ब्रह्म बृहति बृंहयति चे'ति श्रुतिः । बृह बृहि वृद्धाविति पठन्ति । 'परमं यो महद्ब्रह्मे'ति च । विविधमासीदिति विभुः । तथा हि वारुणशाखायाम् । 'विभु प्रभु प्रथमं मेहनावत' इति 'स ह्येव प्राभवद्विविधोऽभवदि'ति । 'सोऽकामयत बहु स्यांप्रजायेये'त्यादेश्च ॥ विभूतयो विविधभूतयः ॥ न जायतेऽर्दयति च संसारमिति जनार्दनः । तथा च बाभ्रव्यशाखायाम् । 'स भूतः स जनार्दन' इति 'स ह्यासीत्स नासीत्सोऽर्दयती'ति ॥ विष्णुः सर्वव्यापित्वप्रवेशित्वादेः । विष्लृ व्याप्तौ विश प्रवेशन इति च पठन्ति । 'गतिश्च सर्वभूतानां प्रजानां चापि भारत । व्याप्तौ मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम । अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत । क्रमणाच्चाप्यहं

---

त्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥ अर्जुन उवाच ॥ परं ब्रह्म परं
धाम पवित्रं परमं भवान् । पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥
॥१२॥ आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा । असितो देवलो व्यासः
स्वयं चैव ब्रवीषि मे ॥ १३ ॥ सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥ स्वयमेवात्मनाऽत्मानं
वेत्थ त्वं पुरुषोत्तम । भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥ वक्तु-
मर्हस्यशेषेण दिव्याह्यात्मविभूतयः । याभिर्विभूतिभिर्लोकानिमांस्त्वं
व्याप्य तिष्ठसि ॥ १६ ॥ कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवान्मया ॥ १७ ॥ विस्तरेणात्मनो
योगं विभूतिं च जनार्दन । भूयः कथय तृप्तिर्हि शृण्वतो नास्ति
मेऽमृतम् ॥ १८ ॥ श्रीभगवानुवाच ॥ हन्त ते कथयिष्यामि दिव्या-
ह्यात्मविभूतयः । प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥
अहमात्मा गुडाकेश सर्वभूताशयस्थितः । अहमादिश्च मध्यं च
भूतानामन्त एव च ॥ २० ॥ आदित्यानामहं विष्णुर्ज्योतिषां रविरं-
शुमान् । मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥ वेदानां
सामवेदोऽस्मि देवानामस्मि वासवः । इन्द्रियाणां मनश्चास्मि भूताना-

पार्थ विष्णुरित्यभिसंज्ञित' इति मोक्षधर्मे ॥ सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः । 'प्रीतिः सुखं कमानन्द' इत्यभिधानात् । 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'ति च । 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति(ज्ञा)जायमानं च पश्येत्' । 'सुखादनन्तात्पालनाल्लापनाच्च यं वै देवं कपिलमुदाहरन्ती'ति बाभ्रव्यशाखायाम् ॥ आनन्दरूपत्वात्पूर्णत्वाल्लोकरमणत्वाच्च रामः । 'आनन्दरूपो निष्परिमाण एष लोकश्चैतस्माद्रमते तेन राम' इति शाण्डिल्यशाखायां । रश्चामश्चेति व्युत्पत्तिः ॥

---

मस्मि चेतना ॥ २२ ॥ रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसां । वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥ पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् । सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥ महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् । यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥ अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः । गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥ उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवं । ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥ आयुधानामहं वज्रं धेनूनामस्मि कामधुक् । प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥ अनन्तश्चास्मि नागानां वरुणो यादसामहं । पितृणामर्यमा चास्मि यमः सम्यमतामहम् ॥ २९ ॥ प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् । मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥ पवनः पवतामस्मि रामः शस्त्रभृतामहं । झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥ सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन । अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥ अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च । अहमेवाक्षयः कालो धाताऽहं विश्वतो मुखः ॥ ३३ ॥ मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यतां । कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥ बृहत्साम तथा साम्नां गायत्री छन्दसामहम् । मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥ द्यूतं छलयतामस्मि तेज-



आच्छादयति सर्वं वासयति वसति(च)सर्वत्रेति वासुः । देवशब्दार्थ उक्तः पुरस्तात् । 'छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततो ह्यहमि'ति मोक्षधर्मे । विशिष्टः सर्वस्मादासमन्तात्स एवेति व्यासः । तथा चाग्नेयशाखायाम् । 'स व्यासो वीति तमब्वै विः सोऽधस्तात्स उत्तरतः स पश्चात्स पूर्वस्मात्स दक्षिणतः स उत्तरत इती'ति । 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित'इति च ॥ मया विना यद्भूतं स्यात्तन्नास्ति । 'विश्वरूप अनन्तगति(ते)रनन्तभाग अनन्तग अनन्त' इत्यादि मोक्षधर्मे ॥ यद्यद्विभूतिमदिति विस्तरः । विष्ण्वादीनि तत्स्वरूपाण्येव । अन्यानि तु तेजोयुक्तानि । तथा च पैङ्गिखिलेषु । 'विशेषका रुद्रवैन्येन्द्रदेवराजन्याद्या अंशयुता अन्यजीवाः । कृष्णव्यासौ रामकृष्णौ च रामकपिलौ यज्ञप्रमुखाः स्वयं स' इति । 'स एवैको भार्गवदाशरथिकृष्णाद्यास्त्वंशयुता अन्यजीवा' इति गौतमखिलेषु । 'ऋषयो मनवो देवा मनुपुत्रा महौजसः । कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः । एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयमि'ति भागवते ऋष्यादीनंशयुतत्वेनोक्त्वा वराहादीन्स्वरूपत्वेनाह । तुशब्द एवार्थे । अन्यस्तु विशेषो न कुत्राप्यवगतः । अंशत्वं तत्राप्यव-

---

स्तेजस्विनामहम् । जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥ वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः । मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥ दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् । मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥ यच्चापि सर्वभूतानां बीजं तदहमर्जुन । न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥ नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप । एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥ यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ ४१ ॥

गतम् । ‘उद्धवर्हात्मनः केशावि’ति । मृडयन्तीति बहुवचनं चा-
युक्तम् । न ह्यन्तरान्यदुक्त्वा पूर्वमपरामृश्य तत्क्रियोच्यमाना दृष्टा
क्वचित् ॥ किमिति वक्ष्यमाणप्राधान्यज्ञापनार्थम् । न तूक्तनिष्फलत्व-
ज्ञापनाय । तथासति नोच्येत । ‘अज्ञात्वैनं सर्वविशेषयुक्तं देवं परं को
विमुच्येत बन्धादि’ति च ऋग्वेदखिलेषु । त्वं तु बहुफलप्राप्तियोग्य
इति तवेति विशेषणम् । अन्यस्तुल्यर्थत्वेन प्रसिद्धश्चैकत्र किंशब्दः ।
‘रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् । तावुभौ यदि न स्यातां
तपसा किं प्रयोजनमि’त्यादौ । प्राधान्यं च प्रसिद्धमेकत्र दर्शनात्सर्वत्र
भगवद्दर्शनस्य ‘यो मां पश्यति सर्वत्रे’त्यादौ ॥ ॥ इति श्रीमदानन्द-
तीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये दशमोऽध्यायः ॥ १० ॥

ॐ ॥ यथा श्रुते ध्यानं शक्यं तथा स्वरूपस्थितिरनेनाध्याये-
नोच्यते ॥ प्रभुः समर्थः । ‘नास्ति तस्मात्परं भूतं पुरुषाद्वै सनातना-

---

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन
स्थितो जगत् ॥ ४२ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ०विभूतियोगो-
नाम दशमोऽध्यायः ॥ १० ॥ ॥ ॥ ॥ ॥

अर्जुन उवाच ॥ मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥ भवाप्ययौ हि भूतानां
श्रुतौ विस्तरशो मया । त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥२॥
एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर । द्रष्टुमिच्छामि ते रूपमैश्वरं
पुरुषोत्तम ॥ ३ ॥ मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥ श्रीभगवानुवाच ॥
पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः । नानाविधानि दिव्यानि
नानावर्णाकृतीनि च ॥ ५ ॥ पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥ इहैकस्थं जगत्कृत्स्नं
पश्याद्य सचराचरम् । मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥



दि’ति मोक्षधर्मे । ‘प्रभुरीशः समर्थश्चे’त्यभिधानम् ॥ हरिः सर्वयज्ञादि
भागहारित्वात् । ‘इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णो मे
हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृत’ इति मोक्षधर्मे ॥ सर्वाश्चर्यमयं सर्वा-
श्चर्यात्मकम् ॥ सहस्रशब्दोऽनन्तवाची । तदपि पाकशासनविक्रम इत्या-
दिवत्प्रत्यायनार्थमेव । तथाहचृग्वेदखिलेषु । ‘अनन्तशक्तिः परमोऽनन्त-
वीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपी’ति । महातात्पर्याच्च प्राबल्यम् ।
न च परिमाणोक्त्या किञ्चित्प्रयोजनम् ॥ अनेकशब्दोऽनन्तवाची ।
अनन्तबाहुमिति च वक्ष्यति । ‘सर्वतः पाणिपादन्तदि’त्यादि च ।
‘विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् । सम्बाहुभ्यां
धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एक’इत्यृग्वेदे । ‘विश्वतश्चक्षुरुत-
विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमति
सम्पतत्रैर्द्यावापृथिवीजनयन्देव एक’इति यजुर्वेदे । विश्वशब्दश्चानन्त-
वाची । ‘सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव चे’त्यभिधानात् ।

---

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा । दिव्यं ददामि ते चक्षुः पश्य मे
योगमैश्वरम् ॥८॥ सञ्जय उवाच ॥ एवमुक्त्वा ततो राजन्महायोगेश्वरो
हरिः । दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥ अनेकवक्त्रनयन-
मनेकाद्भुतदर्शनम् । अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥ दिव्य
माल्याम्बरधरं दिव्यगन्धानुलेपनम् । सर्वाश्चर्यमयं देवमनन्तं विश्वतो
मुखम् ॥११॥ दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा
स्याद्भासस्तस्य महात्मनः ॥१२॥ तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥ ततः स विस्मयाविष्टो
हृष्टरोमा धनञ्जयः । प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥
अर्जुन उवाच ॥ पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेष-
सङ्घान् । ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥
अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् । नान्तं न मध्यं

'अनन्तपादं तमनन्तबाहुमनन्तवक्त्रं पुरुषं रूपमेकमि'ति बाभ्रव्य-
शाखायाम् । महत्त्वाद्युक्तिस्तु तदात्मकत्वेनापि भवति । अन्यथा'ऽना-
दिमत्परं ब्रह्मे'त्याद्ययुक्तं स्यात् । एकत्रानन्तान्यस्य रूपाणीत्यनन्तरूपः ।
अन्यत्र त्वपरिमाण इति । उक्तं ह्युभयमपि । 'परात्परं यन्महतो
महान्तं यदेकमव्यक्तमनन्तरूपमि'ति यजुर्वेदे । अव्यक्तस्यानन्तत्वादेव
महतो महत्वेऽपरिमेयत्वं सिद्ध्यति । 'महान्तं च समावृत्य प्रधानं
समवस्थितम् । अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यत' इत्या-
दित्यपुराणे । तानि चैकैकानि रूपाण्यनन्तानि चैकत्र भवन्ति ।
'असङ्ख्याता ज्ञानकास्तस्य देहाः सर्वे परिमाणविवर्जिताश्चे'त्यृग्वेदखि-
लेषु । 'यावान्वा अयमाकाशस्तावानेषोऽतर्हृदय आकाशः उभे अस्मि-
न्द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसा-
वुभावि'ति । 'कृष्णस्य गर्भजगतोऽतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणा-
तपत्रमि'ति च भागवते । न चैतदयुक्तम् । अचिन्त्यशक्तित्वादीश्व-
रस्य । 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदि'ति श्रीविष्णु-
पुराणे । 'नैषा तर्केण मतिरापनेये'ति च श्रुतिः । अतिप्रसङ्गस्तु महा-
तात्पर्यवशाद्वाक्यबलाच्चापनेयः । न हि घटवत्कश्चिदपि पदार्थो न दृष्ट
इत्येतावता प्रमाणदृष्टः स निराक्रियते । केषुचित्पदार्थेषु वाक्यव्यवस्था
अचिन्त्यशक्तित्वाभावादङ्गीक्रियते । 'गुणाः श्रुताः सुविरुद्धाश्च देवे
सन्त्यश्रुता अपि नैवात्रशङ्का । चिन्त्या अचिन्त्याश्च तथैव दोषाः
श्रुताश्च नाङ्गैर्हि तथा प्रतीताः । एवं परेऽन्यत्र श्रुताश्रुतानां गुणागुणानां
च क्रमाद्व्यवस्थे'ति जाबालखिलश्रुतेश्च । उपचारत्वपरिहाराय न मध्य-
मिति । अन्यथाऽऽद्यन्ताभावेनैव तत्सिद्धेः । विश्वरूपः पूर्णरूपः । 'स
विश्वरूपोऽनूनरूपो यतोऽयं सोऽनन्तरूपो न हि नाशोऽस्ति तस्ये'ति
शाण्डिल्यशाखायाम् ॥ अनलार्कद्युतिमित्युक्ते मितत्वशङ्कामपाकरोति ।

---

न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूपम् ॥ १६ ॥ किरीटिनं
गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् । पश्यामि त्वां



अप्रमेयमिति ॥ शशिसूर्यनेत्रमित्यप्यहं क्रतुरित्यादिवत् । 'तदङ्गजाः
सर्वसुरादयोऽपि तस्मात्तदङ्गेत्यृषिभिः स्तुतास्त' इत्यृग्वेदखिलेषु ।
'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायते'त्यादि च । बहुरूपत्वाद्ब्रह्मा-
श्रयत्वं च तेषां युक्तम् ॥ 'मातापित्रोरन्तरङ्गः स एकरूपेण चान्यैः
सर्वगतः स एक'इति वारुणश्रुतेः एकेनैव रूपेण द्यावापृथिव्योरन्तरं
व्याप्तो भवति । पश्य मे पार्थ रूपाणीति बहूनि रूपाणि प्रतिज्ञातानि ।
मातापितरौ च पृथिवीद्यावौ । 'मा नो माता पृथिवी दुर्मतौ धात्' ।
'मधु द्यौरस्तु नः पिते' त्यादि प्रयोगात् । न तु नियमतो भयप्रदं
तत्स्वरूपम् । नारदस्य तदभावात् । केषाञ्चित्तथा दर्शयति भगवान् ।
'प्रीयन्ति केचित्तस्य रूपस्य दृष्टौ बिभेति कश्चिदभ्यसे सर्वतृप्तिरि'ति
वारुणशाखायाम् । न तु तं सर्वे पश्यन्ति । अदृष्ट्वापि तन्निरूप्यभये
द्रष्टुस्तथा प्रतिभाति । तथा च गौतमखिलेषु । 'दृष्ट्वा देवं मोदमाना
अदृष्ट्वाऽप्येतद्भयाद्बिभ्यतो दृष्टवत्ते । पश्यन्ति तन्न्यस्तचक्षुर्मुखांस्तु

---

दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥ त्वमक्षरं परमं
वेदितव्यं त्वमस्य विश्वस्य परं निधानम् । त्वमव्ययः शाश्वतधर्म-
गोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥ अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् । पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा
विश्वमिदं तपन्तम् ॥ १९ ॥ द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन
दिशश्च सर्वाः । दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥
॥ २० ॥ अमी हि त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥
॥२१॥ रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥ रूपं
महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् । बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ २३ ॥ नभः स्पृशं दीप्तमनेकवर्णं

तस्मिन्नेवैते मनसो गतत्वादि’ति ॥ धर्मान्तरज्ञानार्थमेव को भवानिति पृच्छति। यथा कश्चित्किञ्चिन्नामादिकं जानन्नपि जातिज्ञानार्थं पृच्छति कस्त्वमिति । यदि तमेव न जानाति तर्हि विष्णवित्येवं सम्बोधनं न स्यात् । त्वमक्षरमित्यादि च ॥ कालशब्दो जगद्बन्धनच्छेदनज्ञानादि-सर्वभगवद्धर्मवाची । कल बन्धने, कल च्छेदने, कल ज्ञाने, कल कामधेनुरिति च पठन्ति । प्रसिद्धश्च स शब्दो भगवति । ‘ नियतं कालपाशेन बद्धं शक्र विकत्थसे । अयं स पुरुषः श्यामो लोकस्य हरति प्रजाः । बध्वा तिष्ठति मां रौद्रः पशून्रशनया यथे’ति मोक्षधर्मे ।

---

व्यात्ताननं दीप्तविशालनेत्रम् । दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं
न विन्दामि शमं च विष्णो ॥ २४ ॥ दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि। दिशो न जाने न लभे च शर्म प्रसीद
देवेश जगन्निवास ॥ २५ ॥ अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवा-
वनिपालसङ्घैः । भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योध-
मुख्यैः ॥ २६ ॥ वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि
भयानकानि। केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥
॥ २७ ॥ यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥
यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः। तथैव
नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥ लेलिह्यसे
ग्रसमानः समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः । तेजोभिरापूर्यजग-
त्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥ आख्याहि मे को
भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद। विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥ श्रीभगवानुवाच ॥ कालोऽस्मि
लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः। ऋतेऽपि त्वां न
भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥ तस्मात्त्वमुत्तिष्ठ
यशो लभस्व जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धं। मयैवैते निहताः पूर्वमेव





विष्णुना बद्धो बलिर्वक्ति। ‘विष्णौ चाधीश्वरे चित्तं धारयन्कालविग्रह’ इति भागवते। प्रवृद्धः परिपूर्णोऽनादिर्वा। ‘ऋतं च सत्यं चाभीद्धादि’ति हि श्रुतिः। ‘एतन्महद्भूतमनन्तमि’ति च। ‘प्र विष्णुरस्तु तवसस्तवीयांस्त्वेषं ह्यस्य स्थविरस्य नामे’ति च। न तु वर्धनम्। ‘नासौ जजान न मरिष्यति नैधतेऽसावि’ति भागवते। ‘यस्य दिव्यं हि तद्रूपं क्षीयते वर्धते न चे’ति मोक्षधर्मे। न कर्मणेति तु कर्मणापि न, किमु स्वयमिति। लोकान्समाहर्तुमिह विशेषेण प्रवृत्तः। भ्रात्रादींश्चर्ते इत्यपिशब्दः। प्रत्यनीकत्वं तु परस्परतया। सर्वेऽपि न भविष्यन्ति। अक्षौहिण्यादिभेदेन बहुवचनं च युक्तम् ॥ योऽस्य शिरश्छिन्नं भूमौ पातयति तच्छिरो भेत्स्यतीति तत्पितुर्वराज्जयद्रथोऽपि विशेषेणोक्तः। (प्र)सवरा वासवी शक्तिरिति कर्णः॥ यदेतद्वक्ष्यमाणं तत्स्थाने युक्तमेवेत्यर्थः। अग्नीषोमाद्यन्तर्यामितया जगद्धर्षणादेर्हृषीकेशः। केशत्वं त्वंशूनां तन्नियतत्वादेः। प्रमाणं तु शशिसूर्यनेत्रमित्यत्रोक्तम्। हृषीकाणामिन्द्रियाणामीशत्वाच्च हृषीकेशः। तेषां विशेषत ईशत्वं च ‘यः प्राणे तिष्ठन्नि’त्यादौ सिद्धम्। ‘न मे हृषीकाणि पतन्त्यसत्पथ’ इत्यादिप्रयोगाच्च। इतरोऽर्थो मोक्षधर्मेषु सिद्धः। ‘सूर्याचन्द्रमसौ शश्वत्केशैर्मे अंशुसंज्ञितैः। बोधयंस्थापयंश्चैव जगदुत्पद्यते पृथक्। बोधनात्स्थापनाच्चैव जगतो हर्षसम्भवात्। अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन। हृषीकेशोऽहमीशानो वरदो लोकभावन’इति ॥ कथं स्थान इति तदाह। कस्मादि-

---

निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥ द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधमुख्यान्। मया हतांस्त्वं जहि मा व्यथिष्ठा
युद्ध्यस्व जेताऽसि रणे सपत्नान् ॥ ३४ ॥ सञ्जय उवाच ॥ एतच्छ्रुत्वा
वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी। नमस्कृत्य भूय एवाह
कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥ अर्जुन उआच ॥ स्थाने
हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च। रक्षांसि भीतानि
दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६ ॥ कस्माच्च ते न

त्यादिना । पूर्णश्चासावात्मा चेति महात्मा । आत्मशब्दश्चोक्तो भारते । 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यत'इति । तत्परं सदसतोः परम् । 'असच्च सच्चैव च यद्विश्वं सदसतः परमि'ति च भारते ॥ एकस्त्वमेव कारयिता नान्योऽ

---

नमेरन्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे । अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥ त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानं । वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥ वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च । नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥ ॥ ३९ ॥ नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व । अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥ सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति । अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥ यच्चापहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु । एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥ पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् । नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः ॥४३॥ तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् । पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥ अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे । तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥ किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव । तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥ श्रीभगवानुवाच ॥ मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् । तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥ न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः । एवं रूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥ मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्



स्त्यथापि ॥ स्वकं रूपं तु भ्रान्तप्रतीत्या । अन्यथा तदपि स्वकमेव । प्रमाणानि तूक्तानि पुरस्तात् ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये एकादशोऽध्यायः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

ॐ ॥ अव्यक्तोपासनाद्भगवदुपासनस्योत्तमत्वं प्रदर्श्य तदुपायं प्रदर्शयत्यस्मिन्नध्याये ॥ तदुपासनमपि मोक्षसाधनं प्रतीयते । 'श्रियं वसाना अमृतत्वमायन्भवन्ति सत्या समिथा मितद्रावि'ति । 'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यत' इति च । अव्यक्तं च महतः परम् । 'महतः परमव्यक्तमि'त्युक्तपरामर्शोपपत्तेः । 'उपास्य तां श्रियमव्यक्तसंज्ञां भक्त्या मर्त्यो मुच्यते सर्वबन्धैरि'ति सामवेदे आग्निवेश्यशाखायाम् । महच्च माहात्म्यं तस्या वेदेषूच्यते । 'चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयमि'ति । 'चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्त' इति च ।



---

ममेदम् । व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥४९॥ सञ्जय उवाच ॥ इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः । आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥ अर्जुन उवाच ॥ दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन । इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥ श्रीभगवानुवाच ॥ सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम । देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ॥ ५२ ॥ नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५४ ॥ मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु०विश्वरूपदर्शनयोगोनामैकादशोऽध्यायः ॥ ११ ॥ ॥ ॥ ॥ ॥

'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैरि'त्यारभ्य 'अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्। तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम्। मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तं। अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि। यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्। अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हंतवा उ। अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वं १ न्तः समुद्रे। परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूवे'त्यादि च। 'त्वया जुष्टः स ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वये'ति च। इति शङ्का कस्यचिद्भवति। अतो जानन्नपि सूक्ष्मयुक्तिज्ञानार्थं पृच्छति। एवमिति। एवंशब्देन दृष्टश्रुतरूपं मत्कर्मकृदित्यादिप्रकारश्च परामृश्यते। अव्यक्तं प्रकृतिः। 'महतः परमव्यक्तमि'ति प्रयोगात्। 'यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्। प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवदि'ति भागवते। अक्षरं च तत्। 'अक्षरात्परतः पर' इति श्रुतेः। परं तु ब्रह्म न हि भगवतोऽन्यत्। 'आनन्दमानन्दमयेऽवसाने सर्वात्मके ब्रह्मणि वासुदेव' इति भागवते। रूपं चेदृशं साधितं पुरस्तात्। उपासनं च तथैव कार्यं। 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादि'त्यारभ्य 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यत' इति हि साभ्यासा। आदित्यवर्णत्वादिश्च न वृथोपचारत्वेनाङ्गीकार्यः। तथाच सामवेदे सौकरायणश्रुतिः। 'स्थाणुर्ह वै प्राजापत्यः स प्रजापतिं पितरमेत्योवाच। मुमुक्षुभिः साधुभिः पूतपापैः किमु ह वै तारकं तारवाच्यम्। ध्यानं च तस्यास्तरुचेः कथं स्याद्ध्येयश्च कः पुरुषोऽलोमपाद इति। तं होवाच। एषविष्णुस्तारको

अर्जुन उवाच॥ एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते। ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥१॥ श्रीभगवानुवाच॥



ऽलोमपादो ध्यानं च तस्यास्तरुचेर्वदामि। सोऽनन्तशीर्षो बहुवर्णः सुवर्णो ध्येयः स वै लोहितादित्यवर्णः। श्यामोऽथ वा हृदये सोऽष्टबाहुरनन्तवीर्योऽनन्तबलः पुराण' इति। अरूपत्वादेस्तु गतिरुक्ता पुरस्तात्। पुरुषभेदश्च प्रश्नादौ प्रतीयते। 'त्वां पर्युपासते ये चाप्यक्षरमि'त्यादौ॥ भवन्तु त्वदुपासका एवोत्तमाः। इतरेषां तु किं फलमित्यत आह। ये त्वित्यादिना। अनिर्देश्यत्वं चोक्तं भागवते मायायाः। 'अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चय' इति। ईश्वरस्तु दैवशब्देनोक्तो दैवमन्ये पर इत्यत्र। उक्तं च सामवेदे काषायणश्रुतौ। 'नासदासीन्नो सदासीत्तदानीमि'ति 'न महाभूतं नोपभूतं तदासीदि'त्याद्यारभ्य तम आसीत्तमसा गूळ्हमग्र' इति। 'तमो ह्यव्यक्तमजरमनिर्देश्यमेषा ह्येव प्रकृतिरि'ति। सर्वगाऽचिन्त्यादिलक्षणा च सा। तथा हि मोक्षधर्मे। 'नारायणगुणाश्रयादजरादतीन्द्रियादग्राह्यादसम्भवतः असत्यादहिंसाल्ललामाद्वितीयप्रवृत्तिविशेषाद्वैरादक्षयादमरादक्षरादमूर्तितः सर्वस्याः सर्वकर्तुः शाश्वततमस' इति। 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वत' इति मानवे। 'कूटस्थोऽक्षर उच्यत' इति वक्ष्यति। कूट आकाशे स्थिता कूटस्था। 'आकाशे संस्थिता ह्येषा ततः कूटस्थिता मते'त्यग्वेदखिलेषु। 'सा सर्वगा निश्चला लोकयोनिः सा चाक्षरा विश्वगा विरजस्के'ति सामवेदे गौपवनशाखायाम्॥ कथं तर्हि त्वदुपासकानामुत्तमत्वमित्यत आह। क्लेश इति। अव्यक्ता गतिर्दुःखं ह्यवाप्यते। गतिर्मार्गः। अव्यक्तो-

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥२॥ ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते। सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्॥३॥ सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः। ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः॥४॥ क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसां। अव्यक्ता हि गतिर्दुःखं देहवद्भिर-

पासनद्वारको मत्प्राप्तिमार्गो दुःखमाप्यत इत्यर्थः । अतिशयोपासन-सर्वेन्द्रियातिनियमनसर्वत्रसमबुद्धित्वसर्वभूतहितेरतत्वातिसुष्ठ्वाचारसम्यग्विष्णुभक्त्यादिसाधनसन्दर्भमृते नाव्यक्तापरोक्ष्यम् । तद्दते च न विष्णुप्रसादः । सत्यपि तस्मिन्न सम्यग्भगवदुपासनमृते । नर्ते च तं मोक्षः । विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इति क्लेशिष्ठोऽयं मार्ग इति भावः । तथाप्यपरोक्षीकृताव्यक्तानां सुकरं भगवदुपासनमित्येतावत्प्रयोजनम् । तत्रापि योऽव्यक्तापरोक्ष्ये प्रयासः तावता प्रयत्नेन यदि भगवन्तमुपास्ते ऊनेन वा तदा भगवदापरोक्ष्यमेव भवतीति द्वितीयमधिकम् । इन्द्रियसंयमाद्यूनभावे सत्युपासकस्यापि देवी नातिप्रसादमेतीति । देवस्तु तानि साधनानि भक्तिमतस्स्वयमेवाप्रयत्नेन ददातीति चातिसौकर्यमिति भक्तानां भगवदुपासने इतरत्र क्लेशोऽधिकतरः । तदेतत्सर्वं पर्युपासते सन्नियम्याधिकतर इति परि-सं-तरप्शब्दैः प्रतीयते । सामवेदे माधुच्छन्दसशाखायां चोक्तम् । 'भक्ताश्च येऽतीव विष्णावतीवजितेन्द्रियाः सम्यगाचारयुक्ताः । उपासते तां समबुद्धयश्च तेषां देवी दृश्यते नेतरेषाम् । दृष्टा च सा भक्तिमतीव विष्णौ दत्वोपास्तौ सर्वविघ्नांश्छिनत्ति । उपास्य तं वासुदेवं विदित्वा ततस्ततः शान्तिमत्यन्तमेती'ति । उक्तं च सामवेदे अयास्यशाखायाम् । 'प्रसन्नो भविता देवः सोऽव्यक्तेन सहैव तु । यावता तत्प्रसादो हि तावतैव न संशयः । न तत्प्रसादमात्रेण प्रीयते स महेश्वरः । तस्मिन्प्रीते तु सर्वस्य प्रीतिस्तु भवति ध्रुवम् । यद्यप्युपासनाधिक्यं तथापि गुणदो हि सः । मुक्तिदश्च स एवैको नाव्यक्तादिस्तु कश्चने'ति । 'ममात्मभावमिच्छन्तो यतन्ते परमात्मन' इति च मोक्षधर्मे श्रीवचनम् । 'धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि । प्रश्रिते दानशीले च सदैव निवसाम्यहमि'ति च । महतः परं तु ब्रह्मैव । तथा हि भगवता सयुक्तिकमभिहितम् । 'वदतीति चेन्न





प्राज्ञो हि' । 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्चे'त्यादि । तमिति पुल्लिङ्गाच्चैतत्सिद्धिः । महतः परत्वं त्वव्यक्तपरस्य भवत्येव । तथाचाग्निवेश्यशाखायाम् । 'अनाद्यनन्तं महतः परं ध्रुवमि'ति । 'परो हि देवः पुरुहूतो महत्त' इति । न चाव्यक्तस्वरूपं भगवता निषिद्धम् । भारतादौ साधितत्वात् । 'शरीररूपकविन्यस्तगृहीतेरि'त्यादौ साङ्ख्यप्रसिद्धं प्रधानं निषिध्य वैदिकमव्यक्तमेवोक्तम् । तथाच सौकरायणश्रुतिः । 'शरीररूपिका साऽशरीरस्य विष्णोर्यतः प्रिया सा जगतः प्रसूतिरि'ति । सुव्रतानां क्षिप्रं महदैश्वर्यं देवी ददाति न देव इति विशेषः । 'सुवर्णवर्णां पद्मकरां च देवीं सर्वेश्वरीं व्याप्तजटां च बुध्वा । सेवेति वै सुव्रतानां तु मासान्महाविभूतिं श्रीस्तु दद्यान्न देव'इत्यृग्वेदखिलेषु ॥ मदुपासकानां भक्तानां न कश्चित्क्लेश इति दर्शयति । ये त्वित्यादिना । उक्तं च सौकरायणश्रुतौ । 'उपासते ये पुरुषं वासुदेवमव्यक्तादेरीप्सितं किं नु तेषामि'ति । 'तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः । अहमेव गतिस्तेषां निराशीः कर्मकारिणामि'ति मोक्षधर्मे ॥ अज्ञानपूर्वादभ्यासाज्ज्ञानमेव विशिष्यते । ज्ञानमात्रात्सज्ज्ञानं ध्यानम् । तथा च सामवेदे अनभिम्लानशाखायाम् । 'अधिकं केवला-

---

वाप्यते ॥५॥ ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥ मय्येव मन आधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥ अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरं । अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९ ॥ अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव । मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥ अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः । सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥ श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।

भ्यासाज्ज्ञानं तत्सहितं ततः । ध्यानं ततश्चापरोक्ष्यं ततः शान्तिर्भविष्यती'ति । ध्यानात्कर्मफलत्याग इति स्तुतिः । अन्यथा कथमसमर्थोऽसीत्युच्येत ? । 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यत ' इति चोक्तम् । ' सर्वाधिकं ध्यानमुदाहरन्ति ध्यानाधिके ज्ञानभक्ती परात्मन् । कर्माफलाकाङ्क्षमथो विरागस्त्यागश्च न ध्यानकलाफलार्ह ' इति काषायणशाखायाम् । वाक्यसाम्येप्यसमर्थविषयत्वोक्तेस्तात्पर्याभाव इतरत्र प्रतीयते । ध्यानादिप्राप्तिकारणत्वाच्च त्यागस्तुतिर्युक्ता । केवलध्यानात्फलत्यागयुक्तं ध्यानमधिकम् । ध्यानयुक्तस्त्याग एवात्रोक्तः । अन्यथा कथं त्यागाच्छान्तिरनन्तरमित्युच्यते ? । कथं च ध्यानादाधिक्यम् ? । तथा च गौपवनशाखायाम् । 'ध्यानात्तु केवलात्त्यागयुक्तं तदधिकं भवेदि'ति । न हि त्यागमात्रानन्तरमेव मुक्तिर्भवति । भवति च ध्यानयुक्तात् । केवलत्यागस्तुतिरेवमपि भवति । यथाऽनेन युक्तो जेता नान्यथेत्युक्ते । सर्वारम्भपरित्यागी शुभाशुभपरित्यागीत्यादेः सामान्यविशेषव्याख्यानव्याख्येयभावेनापुनरुक्तिः ॥ हर्षादिभिर्युक्त इत्युक्ते कादाचित्कमपि भवतीति यो न हृष्यतीत्यादि ।

---

ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥ अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च । निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १३ ॥ सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः । मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥ १४ ॥ यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥ अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः । सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥ यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति । शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥ समः शत्रौ च मित्रे च तथा मानापमानयोः । शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥ तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन



उपचारपरिहारार्थं पूर्वम् । आधिक्यज्ञापनार्थं भक्त्यभ्यासः । ये तु सर्वाणि कर्माणीत्यादेः प्रपञ्च एषः ॥ पिण्डीकृत्योपसंहरति । ये तु धर्म्यामृतमिति । धर्मो विष्णुस्तद्विषयं धर्म्यम् । धर्म्यं मृत्यादिसंसारनाशकं चेति धर्म्यामृतम् । श्रदास्तिक्यम् । 'श्रन्नामास्तिक्यमुच्यत' इत्यभिधानात् । तद्धानाः श्रद्धानाः ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥

ॐ ॥ पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान्पिण्डीकृत्य विविच्य दर्शयत्यनेनाध्यायेन ॥ यद्विकारि येन विकारेण युक्तम् । यतश्च यत् यतो याति प्रवर्तते । स च प्रवर्तकः । यतश्च यदित्यस्मात्प्रवर्तते । क्षेत्रमितिवचनम् । स च य इति स्वरूपमात्रम् ॥ ब्रह्मसूत्राणि शारीरकसूत्राणि ॥ इच्छादयो विकाराः ॥ स च यो यत्प्रभावश्चेति वक्तुं तज्ज्ञानसाधनान्याह । अमानित्वमित्यादिना । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं

---

केनचित् । अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥ ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते । श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु० भक्तियोगोनाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥

अर्जुन उवाच ॥ प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च । एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥ श्रीभगवानुवाच ॥ इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ ॥ २ ॥ क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत । क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ३ ॥ तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् । स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ४ ॥ ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ५ ॥ महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ६ ॥ इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ७ ॥ अमानित्वमदम्भित्व-

दम्भः । ‘ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दम्भो माहात्म्यभावनमि’ति ह्यभिधानम् । आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् ॥ सक्तिः स्नेहः । स एवातिपक्वोऽभिष्वङ्गः । ‘स्नेहः सक्तिः स एवातिपक्वोऽभिष्वङ्ग उच्यत’ इत्यभिधानम् ॥ तत्त्वज्ञानार्थदर्शनम् । अपरोक्षज्ञानार्थं शास्त्रदर्शनम् ॥ परं ब्रह्मेति स च य इति प्रतिज्ञातमुच्यते । अन्यच्च प्रभाव इति । आदिमद्देहादिवर्जितमनादिमत् । अन्यथाऽनादीत्येव स्यात् ॥ सर्वेन्द्रियाणि गुणांश्चाभासयतीति सर्वेन्द्रियगुणाभासम् । इन्द्रियवर्जितत्वाद्यर्थ उक्तः पुरस्तात् । विकारान्तर्भावाज्ज्ञानसाधनं प्रथमत उक्तम् । बहुत्वात्साधनात्युपयोगात्प्रभावः ॥ यतश्च यदिति वक्तुं प्रकृतिविकारपुरुषान्सङ्क्षिप्याह । गुणाः सत्त्वादयः । तेषामल्पो विशेषो लयात्सर्गे

---

महिंसा क्षान्तिरार्जवं । आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥८॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च । जन्ममृत्युजराव्याधिदुःख-
दोषानुदर्शनम् ॥ ९ ॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु । नित्यं च
समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥१०॥ मयि चानन्ययोगेन भक्तिरव्यभि-
चारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ११ ॥ अध्यात्मज्ञान-
नित्यत्वं तत्त्वज्ञानार्थदर्शनं । एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥
॥१२॥ ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । अनादिमत्परं ब्रह्म
न सत्तन्नासदुच्यते ॥ १३ ॥ सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखं ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४ ॥ सर्वेन्द्रियगुणाभासं
सर्वेन्द्रियविवर्जितम् । असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १५ ॥
बहिरन्तश्च भूतानामचरं चरमेव च । सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं
चान्तिके च तत् ॥ १६ ॥ अविभक्तं च भूतेषु विभक्तमिव च स्थितं ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १७ ॥ ज्योतिषामपि
तज्ज्योतिस्तमसः परमुच्यते । ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य
विष्ठितम् ॥ १८ ॥ इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः । मद्भक्त-
एतद्विज्ञाय मद्भावायोपपद्यते ॥ १९ ॥ प्रकृतिं पुरुषं चैव विद्ध्यनादी



इति विकाराः पृथगुक्ताः । ‘कार्याकार्यगुणास्तिस्रो यतः स्वल्पोद्भवा जनावि’ति माधुच्छन्दसशाखायाम् ॥ कार्यं शरीरम् । ‘शरीरं कार्यमुच्यत’ इत्यभिधानम् । कारणानीन्द्रियाणि । भोगोऽनुभवः । स हि चिद्रूपत्वादनुभवति । प्रकृतिश्च जडत्वात्परिणामिनी । ‘कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः । भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परमि’ति भागवते ॥ यतश्च यदित्याह । उपद्रष्टेति । अनुमन्ता अन्वनुविशेषतो निरूपकः ॥ पुरुषः सुखदुःखानामिति जीव उक्तः । पुरुषं प्रकृतिं चेति जीवेश्वरौ सहैवोच्येते । अन्यत्र महातात्पर्यविरोधः । उत्कर्षे हि महातात्पर्यम् । तथा हि सौकरायणश्रुतिः । ‘अवाच्योत्कर्षे महत्वात्सर्ववाचां सर्वन्यायानां च महत्तत्परत्वम् । विष्णोरनन्तस्य परात्परस्य तच्चापि ह्यस्त्येव न चात्र शङ्का । अतो विरुद्धं तु यदत्र मानं तदक्षजादावथवापि युक्तिः । न तत्प्रमाणं कवयो वदन्ति न चापि युक्तिर्ह्यूनमतिर्हि दृष्टेरि’ति । अतो युक्तिभिरप्येतदपलापो न युक्तः । अतो यया युक्त्या विद्यमानत्वादि कल्पयति साऽप्याभासरूपेति सदेव माहात्म्यं वेदैरुच्यत इति सिद्ध्यति । अवान्तरं च तात्पर्यं तत्रास्ति । उक्तं च तत्रैव । ‘अवान्तरं तत्परत्वं च सत्वे महद्वाप्येकत्वात्तु तयोरनन्त’ इति । श्यामत्वाद्यभिधानाच्च । युक्तं च पुरुषमतिकल्पितयुक्त्यादेराभासत्वम् । अज्ञानसम्भवात् । न तु स्वतः प्रमाणस्य वेदस्याभासत्वम् । अदर्शनं च सम्भवत्येव पुंसां बहूनामप्य-

---

उभावपि । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ २० ॥ कार्य-
कारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतु-
रुच्यते ॥ २१ ॥ पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् । कारणं
गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २२ ॥ उपद्रष्टाऽनुमन्ता च भर्ता
भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २३ ॥
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह । सर्वथा वर्तमानोऽपि न स

ज्ञानात् । तर्ह्यस्मदनधीतश्रुत्यादौ विपर्ययोऽपिस्यादिति वाच्यम् । यतस्तत्रैवाह । ‘नैतद्विरुद्धा वाचो नैतद्विरुद्धा युक्तय इति ह प्रजापतिरुवाच प्रजापतिरुवाचे’ति । तद्विरुद्धं जीवसाम्यम् । आभास एव चेति चोक्तम् । ‘जनमेजय उवाच । बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु । को ह्यत्र पुरुषश्रेष्ठस्तं भवान्वक्तुमर्हति । वैशम्पायन उवाच । नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह । बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकमि’ति मोक्षधर्मे । न चैतत्सर्वं स्वप्नेन्द्रजालवत् । ‘वैधर्म्याच्च न स्वप्नादिवदि’ति भगवद्वचनम् । न च स्वप्नादिवदेकजीवकल्पितत्वे मानं पश्यामः । विपर्यये मा तूक्ता द्वितीये । उक्तं चायास्यशाखायाम् । ‘स्वप्नो ह वा अयं चञ्चलत्वान्न च स्वप्नो न हि विच्छेद एतदिती’ति । नायं दोषः । नहीश्वरस्य जीवैक्यमुच्यते । जीवस्य हीश्वरैक्यमिति ध्येयम् । तदपि न निरुपाधिकम् । अतो न प्रतिबिम्बत्वविरोध्यैक्यम् । तथा च माधुच्छन्दसश्रुतिः । ‘ऐक्यं चापि प्रातिबिम्ब्येन विष्णोर्जीवस्यैवैतद्धृचषयो वदन्ती’ति । अहंग्रहोपासने च फलाधिक्यमाग्निवेश्यश्रुतिसिद्धम् । ‘अहंग्रहोपासकस्तस्य साम्यमभ्याशो ह वा अश्नुते नात्र शङ्के’ति । ‘तदीयोऽहमिति ज्ञानमहंग्रह इतीरित’ इति वामने । ‘तद्वशत्वात्तु सोऽस्मीति भृत्यैरेव न तु स्वत’ इति च । प्रातिबिम्ब्येन सोऽस्मि भृत्यश्चेति भावना । तथाह्ययास्यशाखायाम् । ‘भृत्यश्चाहं प्रातिबिम्ब्येन सोऽस्मीत्येवं ह्युपास्यः परमः पुमान्स’इति । प्रातिबिम्ब्यं च तत्साम्यमेव ॥ साङ्ख्येन वेदोक्तभगवत्स्वरूपज्ञानेन । कर्मिणामपि श्रुत्वा ज्ञात्वा ध्यात्वा दृष्टिः । श्रावकाणां च ज्ञात्वा ध्यात्वा । साङ्ख्यानां च ध्यात्वा ।

---

भूयोऽभिजायते ॥ २४ ॥ ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना । अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ २५ ॥ अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते । तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥२६॥



तथा च गौपवनश्रुतिः । ‘कर्मकृच्चापि तच्छ्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति । श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति । अन्यथा तस्य दृष्टिर्हि कथञ्चिन्नोपजायत’ इति । अन्य इत्यशक्तानामप्युपायदर्शनार्थम् ॥ पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुक्तमाह । यावदित्यादिना ॥ आत्मानं चाकर्तारं यः पश्यति स पश्यति ॥ एकस्थमेकस्मिन्नेव विष्णौ स्थितम् । तत एव च विष्णोर्विस्तारम् ॥ न च व्ययादिस्तस्येत्याह । अनादित्वादिति । सादि हि प्रायो व्ययि गुणात्मकं च । न करोतीत्यादेरर्थ उक्तः पुरस्तात । न लौकिकक्रियादिस्तस्य । अतो ‘न प्रज्ञमि’त्यादिवदिति ॥ भूतेभ्यः प्रकृतेश्च मोक्षसाधनम् अमानित्वादिकम् ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥

---

यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २७ ॥ समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरं । विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २८ ॥ समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् । न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ २९ ॥ प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः । यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ ३० ॥ यदा भूतपृथग्भावमेकस्थमनुपश्यति । तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ३१ ॥ अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः । शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३२ ॥ यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्वत्रावस्थितो देहे तथाऽत्मा नोपलिप्यते ॥ ३३ ॥ यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ॥ ३४ ॥ क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा । भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३५ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु० क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ ॥

ॐ ॥ साधनं प्राधन्येनोत्तरैरध्यायैर्वक्ति ॥ महद्ब्रह्म प्रकृतिः । सा च श्रीभूदुर्गेति भिन्ना । उमासरस्वत्याद्यास्तु तदंशयुता अन्यजीवाः । तथा च काषायणश्रुतिः । 'श्रीर्भूर्दुर्गा भगवती तु माया सा लोकसूतिर्जगतो बन्धिका च । उमा वागाद्या अन्यजीवास्तदंशास्तदात्मना सर्ववेदेषु गीता'इति । मम योनिरिति गर्भाधानार्था योनिः । न तु माता । वाक्यशेषात् । तथा हि सामवेदे शार्कराक्षश्रुतौ । 'विष्णोर्योनिर्गर्भसन्धारणार्था महामाया सर्वदुःखैर्विहीना । तथात्मानं दुःखिवन्मोहनार्थं प्रकाशयन्ती सह विष्णुना से'ति । अतः सीतादुःखादिकं सर्वं मृषाप्रदर्शनमेव । तथा कूर्मपुराणे । 'न चेयं भूः' । तथा च सौकरायणश्रुतिः । 'अन्या भूर्भूरियं तस्य छायाभूताऽवमा सा हि भूतैकयोनिरि'ति । 'अवाप स्वेच्छया दास्यं जगतां प्रपितामही'त्याद्यनभिम्लानश्रुतिः । मत्स्यपुराणोक्तमपि स्वेच्छयैव । महद्ब्रह्मशब्दवाच्याऽपि प्रकृतिरेव । 'महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वर'इति तत्रैव ॥ बन्धप्रकारं दर्शयति साधनानुष्ठानाय सत्वमित्यादिना ॥ रज इति तृष्णासङ्गयोः समुद्भवम् । तयोः कारणम् ॥

---

श्रीभगवानुवाच ॥ परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् । यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥ इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ ॥ २ ॥ ममयोनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् । सम्भवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥ सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः । तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥ सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥ तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥ रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् । तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥ सत्त्वं



अज्ञानं जायते यतस्तदज्ञानजम् । 'प्रमादमोहौ तमस' इति वाक्यशेषात् ॥ रजसस्तु फलं दुःखमित्यल्पसुखं दुःखं । तथा हि शार्कराक्षशाखायां । 'रजसो ह्येव जायते मात्रया सुखं दुःखं तस्मात्तान्सुखिनो दुःखिन इत्याचक्षत' इति । अन्यथा दुःखस्यातिकष्टत्वात् । तमोऽधिकत्वं रजसो न स्यात् ॥ परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यति । अन्यथा 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिमि'ति श्रुतिविरोध इति । 'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुरि'ति मोक्षधर्मे ॥ प्रायो न द्वेष्टि न काङ्क्षति । तथा हि सामवेदे

---

सुखे सञ्जयति रजः कर्मणि भारत । ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥ रजस्तमश्चाभिभूय सत्त्वं भवति भारत । रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥ सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते । ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥ लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा । रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ ॥१२॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च । तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥ यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् । तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥ रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते । तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥ कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् । रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥ सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥ ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥ नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥ गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् । जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥ अर्जुन उवाच ॥ कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो । किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥ श्रीभगवानुवाच ॥ प्रकाशं च प्रवृत्तिं

भाल्लवेयशाखायां । 'रजस्तमःसत्वगुणान्प्रवृत्तान्प्रायो न च द्वेष्टि न चापि काङ्क्षते । तथापि सूक्ष्मं सत्त्वगुणं च काङ्क्षेद्यदि प्रविष्टं सुतमश्च जह्यादि'ति । 'न हि देवा ऋषयश्च सत्त्वस्था नृपसत्तम । हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिका मताः । कथं वैकारिको गच्छेत्पुरुषः पुरुषोत्तममि'ति मोक्षधर्मे । 'सात्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चित' इति च ॥ तुल्यत्वार्थ उक्तः पुरस्तात् ॥ ब्रह्मवत् प्रकृतिवत् भगवत्प्रियत्वं ब्रह्मभूयं । न तु तावत्प्रियत्वं । किन्तु प्रियत्वमात्रं । 'बद्धो वाऽपि तु मुक्तो वा न रमावत्प्रियो हरेरि'ति पाद्मे । भूयाय भावाय ॥ ब्रह्मणो मायायाः । इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥

ॐ ॥ संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति ॥ ऊर्ध्वो विष्णुः । 'ऊर्ध्वपवित्रो वाजिनी वस्वमृतमस्मि

---

च मोहमेव च पाण्डव । न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ ॥ २२ ॥ उदासीनवदासीनो गुणैर्यो न विचाल्यते । गुणा वर्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥ २३ ॥ समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः । तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥ मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः । सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥ मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥ ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु० गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥

श्रीभगवानुवाच ॥ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥ अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः । अधश्च मूलान्यनुसन्ततानि





द्रविणꣳसवर्चसमि'ति हि श्रुतिः । ऊर्ध्वः उत्तमः सर्वतः । अधो निकृष्टं । शाखा भूतानि । श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । तथापि न प्रवाहव्ययः । पूर्वब्रह्मकाले यथा स्थितिस्तथा सर्वत्रापीत्यव्ययता । फलकारणत्वाच्छन्दसां पर्णत्वं । न हि कदाप्यजाते पर्णे फलोत्पत्तिः ॥ अव्यक्तेऽपि सूक्ष्मरूपेण सन्ति शरीरादौ च भूतानीत्यधश्चोर्ध्वं च प्रसृताः । गुणैः सत्वादिभिः । प्रतीतिमात्रसुखत्वात्प्रवालाः विषयाः । मूलानि भगवद्रूपादीनि । भगवानपि कर्मानुबन्धेन हि फलं ददाति । तथाच भाल्लवेयशाखायां । 'ब्रह्म वा अस्य पृथङ्मूलं प्रकृतिः स मूलं सत्त्वादयोऽर्वाचीनमूलं । भूतानि शाखाः छन्दांसि पत्राणि देवनृतिर्यश्चश्च शाखाः । पत्रेभ्यो हि फलं जायते । मात्राः शिफाः । मुक्तिः फलममुक्तिः फलं । मोक्षो रसोऽमोक्षो रसः । अव्यक्ते च शाखाः व्यक्ते च शाखाः । अव्यक्ते च मूलं व्यक्ते च मूलं । एषोऽश्वत्थो गुणालोलपत्रो न स्थीयते न न स्थीयते । न ह्येष कदाचनान्यथा जायते नान्यथा जायत'इति ॥ यथास्थितस्तथा नोपलभ्यते । अन्तादिर्विष्णुः । 'त्वमादिरन्तो जगतोऽस्य मध्यमि'ति भागवते । 'अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुरि'ति मोक्षधर्मे । असङ्गशस्त्रेण सङ्गराहित्यसहितेन ज्ञानेन । 'ज्ञानासिनोपासनया सितेने'ति भागवते । छेदश्च विमर्श एव । ततश्च तस्यैवाबन्धकं भवति । तथा हि । मूलस्थं ब्रह्म प्रतीयते । तच्चोक्तं । तच्छ्रुतावेव 'विमर्शो ह्यस्य छेदः स तं न बध्नाति बध्नाति चान्यानि'ति । तदर्थं च तमेव प्रपद्ये प्रपद्येत । तच्चोक्तं तत्रैव । 'स तं वै प्रपद्येत यं वै प्रपद्य न शोचति न हृष्यति न जायते न म्रियते तद्ब्रह्ममूलं तच्छित्सुरि'ति । 'नारयणेन

---

कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥ न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा । अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥ ततः परं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ।

दृष्टश्च प्रतिबुद्धो भवेत्पुमानि'ति मोक्षधर्मे। छेदनोपायो ह्यत्राकाङ्क्षितः। न च भगवतोऽन्यः शरण्योऽस्ति ॥ साधनान्तरमाह । निर्मानेति ॥ स्वरूपं कथयति । न तदित्यादिना ॥ कर्षतीत्युक्ते जीवस्य स्वातन्त्र्यं प्रतीतं तन्निवारयति । शरीरमित्यादिना । यत् यदा शरीरमवाप्नोति उत्क्रामति च जीवस्तदेश्वरः एतानि गृहीत्वा संयाति । 'यत्र यत्रैव संयुक्तो धाता गर्भं पुनः पुनः । तत्र तत्रैव वसति न यत्र स्वयमिच्छती'ति हि मोक्षधर्मे। 'भावाभावावपि जानन् गरीयो जानामि श्रेयो न तु तत्करोमि । आशासु हर्म्यासु हृदासु कुर्वन्यथा नियुक्तोऽस्मि तथा वहामी'ति च । 'हत्वा जित्वापि मघवन्यः कश्चित्पुरुषायते । अकर्ता त्वेव भवति कर्ता त्वेव करोति तदि'ति च । 'तद्यथा हानः सुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जद्याती'ति च श्रुतिः। 'वाङ्मनसि सम्पद्यते' मनः प्राणे 'प्राणस्तेजसि' तेजः परस्यां देवतायामि'ति च । गन्धानिव सूक्ष्माणि ॥ भोगोऽस्यापि साधितः पुरस्तात् । इन्द्रियद्वारा हि सोऽपि भुङ्क्ते । 'तद्य इमे वीणायां गायन्त्येतं ते गायन्ती'ति च श्रुतिः। गुणान्वितमेव भुङ्क्ते। 'न ह वै देवान्पापं गच्छती'ति श्रुतिः॥ तर्हि किमिति न दृश्यत इत्यत आह। उत्क्रामन्तमित्यादिना ॥ यतन्तो ज्ञानं प्राप्य । अकृतात्मानो अशुद्धबुद्धयः ॥ पूर्वोक्तमेव ज्ञानं प्रपञ्चयति ।

---

तमेवचाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥४॥ निर्मानमोहा
जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः। द्वन्द्वैर्विमुक्ता सुखदुःख
संज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥ न तद्भासयते सूर्यो न शशाङ्को
न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥६॥ ममैवांशो
जीवलोके जीवभूतः सनातनः। मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि
कर्षति ॥७॥ शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि
संयाति वायुर्गन्धानिवाशयात् ॥८॥ श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राण-
मेव च । अधिष्ठाय मनश्चायं विषयानुपसेवते ॥९॥ उत्क्रामन्तं स्थितं





यदादित्यगतमित्यादिना ॥ गां भूमिम् ॥ वेदनिर्णयात्मिका मीमांसा वेदान्तः । तथा च सामवेदे प्राचीनशालश्रुतिः । 'स वेदान्तकृत्स कालक' इति 'स ह्येव युक्तिसूत्रकृत्स कालक' इति ॥ क्षरभूतानि ब्रह्मादीनि । कूटस्थः प्रकृतिः । तथा च शार्कराक्षश्रुतिः । 'प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानं । तदुत्तमं चान्यमुदाहरन्ति जालाजालं मातरिश्वानमेकमि'ति ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

---

वापि भुञ्जानं वा गुणान्वितं । विमूढा नानुपश्यन्ति पश्यन्ति ज्ञान-
चक्षुषः ॥१०॥ यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितं । यतन्तोऽ-
प्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥ यदादित्यगतं तेजो जगद्भास-
यतेऽखिलं । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं ॥१२॥ गामा-
विश्य च भूतानि धारयाम्यहमोजसा । पुष्णामि चौषधीः सर्वाः सोमो
भूत्वा रसात्मकः ॥ १३ ॥ अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥ सर्वस्य चाहं हृदि
सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर
एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥ उत्तमः
पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय
ईश्वरः ॥ १७ ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि
लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥ यो मामेवमसम्मूढो जानाति
पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥ इति
गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । एतद् बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च
भारत ॥ २० ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु० पुराणपुरुषोत्तमयोगो
नाम पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ ॥ ॥ ॥

॥ ॐ ॥ पुमर्थसाधनविरोधीन्यनेनाध्यायेन दर्शयति ॥ तपो
ब्रह्मचर्यादि । 'ब्रह्मचर्यादिकं तप'इत्यभिधानं ॥ पैशुनं परोपद्रव-
निमित्तदोषाणां राजादेः कथनम् । 'परोपद्रवहेतूनां दोषाणां पैशुनं
वचः । राजादेस्तु मदाद्धीतेरदृष्टिर्दर्प उच्यते'इत्यभिधानं । लौल्यं
रागः । 'रागो लौल्यं तथा रक्तिरि'त्यभिधानात् । अचापलं स्थैर्यं ।
'चपलश्चञ्चलोऽस्थिर'इत्यमिधानात् ॥ क्षमा तु क्रोधाभावेन सहाप-
कर्तुरनपकृतिः । 'अक्रोधदोषकृच्छत्रोः क्षमावान्स निगद्यत' इत्यभि-
धानात् ॥ दैवीं सम्पदमभिजातः । प्रतिजातः ॥ जगतः सत्यं प्रतिष्ठा
ईश्वरश्च विष्णुस्तद्वैपरीत्येनाहुः । 'तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै
सत्यं तेषामेष सत्यमि'ति हि श्रुतिः । 'द्वे वा व ब्रह्मणो रूपे मूर्तं चामूर्तं च
मर्त्यं चामृतं च स्थितं च सच्च यच्च त्यच्चे'ति । 'तस्योपनिषत्सत्यस्य सत्य-
मि'ति । 'एषह्येवैतत्सादयति यामयति चेती'ति प्राचीनशालश्रुतिः। पर-
स्पर सम्भवो ह्युक्तः अन्नाद्भवन्तीत्यादिना ॥ दुष्पूरो हि कामः । 'पाताल
इव दुष्पूरो मां हि क्लेशयते सदे'ति हि मोक्षधर्मे ॥ मामात्मपरदेहे-
ष्विति । न कस्यचिद्विष्णुः कारयिता यदिस्यान्मामपीदानीं कारयत्वि-
त्यादि । 'ईश्वरो यदि सर्वस्य कारकः कारयीत मां । अद्येति वादिनं
ब्रूयात्सदाऽधो यास्यसीति हे'ति सामवेदे यास्कश्रुतिः ॥ इति श्रीमदा-
नन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये षोडशोऽध्यायः ॥१६॥

---

श्रीभगवानुवाच ॥ अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं
दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥ अहिंसा सत्यमक्रोधस्त्यागः
शान्तिरपैशुनम् । दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ॥ २ ॥ तेजः
क्षमा धृतिः शौचमद्रोहो नातिमानिता । भवन्ति सम्पदं दैवीमभिजा-
तस्य भारत ॥ ३ ॥ दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च । अज्ञानं
चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ४ ॥ दैवी सम्पद्विमोक्षाय
निबन्धायासुरी मता । मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव॥५॥
द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च । दैवो विस्तरशः प्रोक्त
आसुरं पार्थ मे शृणु ॥६॥ प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥ असत्यमप्रतिष्ठन्ते
जगदाहुरनीश्वरम् । अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥ ८ ॥ एतां
दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयाय जग-
तोऽहिताः ॥ ९ ॥ काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः । मोहाद्-
गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥ चिन्तामपरिमेयां च
प्रलयान्तामुपाश्रिताः । कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः । ईहन्ते कामभोगार्थमन्याये-
नार्थसञ्चयान् ॥ १२ ॥ इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् । इद-
मस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥ असौ मया हतः शत्रुर्हनिष्ये
चापरानपि । ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । यक्ष्ये दास्यामि
मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥ अनेकचित्तविभ्रान्ता मोहजाल-
समावृताः । प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥ आत्म-
सम्भाविताः स्तब्धा धनमानमदान्विताः । यजन्ते नामयज्ञैस्ते दम्भेना-
विधिपूर्वकम् ॥१७॥ अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः । मामा-
त्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥ तानहं द्विषतः क्रूरान्संसारेषु
नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥ आसुरीं
योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्य-
धमां गतिम् ॥ २० ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः
क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१॥ एतैर्विमुक्तः कौन्तेय तमो-
द्वारैस्त्रिभिर्नरः । आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः । न स सिद्धिमवाप्नोति न
सुखं न परां गतिम् ॥२३॥ तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥ इति श्रीमद्भगवद्गीता-
सूपनिषत्सु०दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

ॐ॥ गुणभेदान्प्रपञ्चयत्यनेनाध्यायेन ॥ शास्त्रविधिमुत्सृज्य अज्ञात्वैव । 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मने'तिविधिरुत्सृष्टो हि तैः । 'ये वै वेदं न पठन्ते न चार्थं वेदोज्झितांस्तान्विद्धि सानूनबुद्धीनि'ति माधुच्छन्दसश्रुतिः । अन्यथा तामसा इत्येवोच्येत । न तु विभज्य । यदि सात्त्विकास्तर्हिं नोत्सृष्टशास्त्राः । न हि वेदविरुद्धो धर्मः । 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदामि'ति हि स्मृतिः । 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्यय'इति च भागवते ॥ अतो विभज्याह । त्रिविधेत्यादिना ॥ सत्त्वानुरूपा चित्तानुरूपा । यो यच्छ्रद्धः स एव सः । सात्त्विकश्रद्धः सात्त्विक इत्यादि । कः सात्त्विकश्रद्ध इत्यादि विभज्याह । यजन्त इत्यादिना ॥ भगवत्कर्शनं नामाल्पत्वदृष्टिरेव । 'यो वै महान्तं परमं पुमांसं नैवं द्रष्टा कर्शकः सोऽतिपापी'ति ह्यनभिम्लानश्रुतिः ॥ आसुरो निश्चयो येषां त आसुरनिश्चयाः । 'देवास्तु सात्त्विकाः प्रोक्ताः दैत्या राजसतामसा' इति ह्याग्निवेश्यश्रुतिः ॥ प्रीतिरानन्तरिका । हृद्यत्वं दर्शने । स्थिराश्च न तदैव पक्वा भवंति ।

---

अर्जुन उवाच ॥ ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः । तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥ श्रीभगवानुवाच ॥ त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥ सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥ यजन्ते सात्विका देवान्यक्षरक्षांसि राजसाः । प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥ अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः । दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥ कर्षयन्तः शरीरस्थं भूतग्राममचेतसः । मां चैवान्तः शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥ आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः । यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥ आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥८॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।





तथा ह्याज्यादयः ॥ सौम्यत्वमक्रौर्यं । 'अक्रूरः सौम्य उच्यत' इत्यभिधानं । मौनं मननशीलत्वं । 'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरि'ति हि श्रुतिः । 'एतेन हीदं सर्वं मतं यदनेन हीदं सर्वं मतं तस्मान्मुनिस्तस्मान्मुनिरित्याचक्षत' इति भाल्लवेयश्रुतिः । कथं चान्यथा मानसं तपः स्यात् ?॥ पुनश्च कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह । ओं तत्सदित्यादिना । परस्य ब्रह्मणो ह्येतानि नामानि । 'ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च । सर्वैः शुभैश्चापि युतो न चान्यैरों तत्सदित्येनमथो वदन्ती'ति ह्यृग्वेदखिलेषु । द्वितीयपाद-

---

आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥ यातयामं गतरसं पूति पर्युषितं च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥ अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥ अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥ विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥ देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥ मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥ श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७॥ सत्कारमानपूजार्थं तपो दम्भेन चैव यत् । क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥ मूढग्राहेणात्मनो यत्पीडया क्रियते तपः । परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः । दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥ अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥ ओं तत्सदिति

स्तच्छब्दार्थः । 'सदेव सोम्येदमग्र आसीदि'ति च । 'ओमिति ब्रह्मे'ति च । तेन ब्रह्मणा । आत्मपूजार्थम् । वेदविधिर्व्यञ्जनम् । मा तूक्ता पुरस्तात्॥ तत्फलं मे स्यादित्यनभिसन्धाय ॥ सद्भावशब्देन प्रजननं सूचितं । ओमित्युक्त्वाऽनभिसन्धाय फलं यज्ञदानतपआदिकृतामतिप्रीतेर्नामसाम्याद्ब्रह्मैव निष्पादितं भवतीत्याशयः । तथा च ऋग्वेदखिलेषु । 'ॐ यज्ञाद्या निष्फलं कर्म तत्स्यात्सद्ब्रै तदर्थं कर्म वदन्ति वेदाः । तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेस्तद्रूपत्वाज्जनितं ब्रह्म तस्ये' ति ॥ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

ॐ ॥ पूर्वोक्तं साधनं सर्वं संक्षिप्योपसंहरत्यनेनाध्यायेन ॥ फलानिच्छयाऽकरणेन वा काम्यकर्मन्यासः संन्यासः । त्यागस्तु फलत्याग एव । तथा हि प्राचीनशालश्रुतिः । 'अनिच्छयाऽकर्मणा वापि काम्यन्यासो न्यासः फलत्यागस्तु त्याग'इति ॥ मनीषिण इति विशे-

---

निर्देशो ब्रह्मणस्त्रिविधः स्मृतः । ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥ तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥ तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः । दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥ सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते । प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥ यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते । कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥ अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥२८॥ ॥ इति श्रीमद्भगवद्गीता० श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥

अर्जुन उवाच । संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् । त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥ श्रीभगवानुवाच । काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः । सर्वकर्मफलत्यागं त्यागं प्राहुमनीषिणः ॥ २ ॥ त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।



षणात्पूर्वपक्षोऽपि ग्राह्य एव । फलत्यागेन त्यागो विवक्षितो यज्ञादेस्तत्पक्षे । 'यस्तु कर्मफलत्यागी'ति च वक्ष्यति । अत एक एवायं पक्षः ॥ तत्प्रकारं चाह । निश्चयमित्यादिना । यज्ञभेद उक्तो द्रव्ययज्ञ इत्यादिना । दाने त्वभयदानमन्तर्भवति । एतेषां मध्ये यत्किञ्चिद्यज्ञादिकं कर्तव्यमेवेत्यर्थः । अन्यथा 'ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा । यदीच्छेन्मोक्षमास्थातुमुत्तमाश्रममाश्रयेदि'त्यादिव्यासस्मृतिविरोधः । ज्ञानयज्ञविद्याऽभयदानब्रह्मचर्यादितपसो हि ते । अतो यद्वचोऽन्यथा प्रतीयते अधिकारिभेदेन तद्योज्यं । अन्यथेतरेषां गत्यभावात् ॥ अन्यस्त्यागार्थो न युक्तइत्याह । न हीति ॥ त्यागं स्तौति अनिष्टमिति ॥ पुनः संन्यासं प्रपञ्चयितुं कर्मकारणान्याह । पञ्चेत्यादिना । साङ्ख्ये कृतान्ते ज्ञानसिद्धान्ते ॥ अधिष्ठानं देहादिः । कर्ता विष्णुः ।

---



यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥३॥ निश्चयं श्रृणु मे तत्र त्यागे भरतसत्तम । त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥ ४ ॥ यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥ एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥ नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥ दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥ कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन । सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥ न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते । त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥ नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः । यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥ अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥ पञ्चैतानि महाबाहो कारणानि निबोध मे । साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्म-

स हि सर्वकर्तेत्युक्तं । जीवस्य चाकर्तृत्वे प्रमाणमुक्तं । करणमिन्द्रियाणि । चेष्टाः क्रियाः । हस्तादिक्रियाभिर्हि होमादिकर्माणि जायन्ते । ध्यानादेरपि मानसी चेष्टा कारणं । पूर्वतनी चेष्टाऽपि संस्कारकारणत्वेन भवति । दैवमदृष्टं । तथा चायास्यश्रुतिः । 'देहो ब्रह्माथेन्द्रियाद्याः क्रियाश्च तथाऽदृष्टं पञ्चमं कर्महेतुरि'ति ॥ केवलं निष्क्रियं । 'एनं केवलमात्मानं निष्क्रियत्वाद्वदन्ति ही'ति तत्रैव ॥ तज्ज्ञानं स्तौति । यस्येति । यस्त्वीषद्बध्यते स ईषदहङ्कारी च ॥ एवं तर्हि न पुरुषमपेक्ष्य विधिः । अकर्तृत्वादित्यत आह । ज्ञानमिति । त्रिविधा कर्मचोदना । एतत्त्रिविधमपेक्ष्य कर्मविधिरिति त्रिविधेत्युच्यते । कारणानि सङ्क्षिप्याह । करणमिति । कर्मसङ्ग्रहः कर्मकारणसङ्क्षेपः । अधिष्ठानादि करण एवान्तर्भूतम् । तथा ह्यृग्वेदखिलेषु । 'ज्ञानं ज्ञेयं ज्ञानिनं चाप्यपेक्ष्य विधिरुत्थितः । करणं चैव कर्ता च कर्मकारणसङ्ग्रह'इति । अकर्तृत्वेऽपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति । ईश्वराधीनत्वेऽपि विधिद्वारा नियतस्तेनैव । यदि चेच्छादिर्जायते तर्हि कारितमेवेश्वरेण । फलं च नियतं । वस्तुतोऽकर्तृत्वेप्याभिमानिकं कर्तृत्वं तस्यैव । स्वातन्त्र्यं च जडमपेक्ष्येति न प्रवृत्तिविधिवैयर्थ्यं । सर्वं चैतदनुभवोक्तप्रमाणसिद्धिमिति न पृथक्प्रमाणमुच्यते ॥ पुनः

---

णाम् ॥ १३ ॥ अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥ तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥ यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥१७॥ ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना । करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ॥१८॥ ज्ञानं कर्म





साधनप्रथनाय गुणभेदानाह । ज्ञानमित्यादिना । गुणसङ्ख्याने गुणगणनप्रकरणे ॥ एकं भावं विष्णुं ॥ परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री । 'परेण यः कृतो दोषो दीर्घकालकृतोऽपि वा । यस्तस्य सूचको दोषाद्दीर्घसूत्री स उच्यत'-इत्यभिधानात् ॥ यथार्थत्वनियमाभावो राजस्याः । अन्यथा तामस्या

---

च कर्ता च त्रिधैव गुणभेदतः । प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥ १९ ॥ सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥ पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥ यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥२२॥ नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥ यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः । क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥ अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म तत्तामससमुदाहृतम् ॥ २५ ॥ मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥ रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः । हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥ अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः । विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥ बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु । प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥ प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥ यया धर्ममधर्मं च कार्यं चाकार्यमेव च । अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥३१॥ अधर्मं धर्ममिति या मन्यते तमसावृता । सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥ धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥ यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन । प्रसङ्गेन

भेदाभावात् ॥ नैष्कर्म्यसिद्धिं । नैष्कर्म्यफलां योगसिद्धिम् । यथा येनोपायेन सिद्धिं प्राप्तो ब्रह्माप्नोति तथा निबोध । या सिद्धिर्ज्ञानस्य

---

फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥ यया स्वप्नं भयं शोकं
विषादं मदमेव च । न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥३५॥
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ । अभ्यासाद्रमते यत्र दुःखान्तं
च निगच्छति ॥ ३६ ॥ यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । तत्सुखं
सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥ विषयेन्द्रियसंयोगाद्य-
त्तदग्रेऽमृतोपमम् । परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः । निद्रालस्यप्रमादोत्थं तत्ता-
मसमुदाहृतम् ॥ ३९ ॥ न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥ ब्राह्मणक्षत्रियविशां
शूद्राणां च परन्तप । कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्म-
कर्म स्वभावजम् ॥ ४२ ॥ शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥ कृषिगोरक्षवाणिज्यं
वैश्यकर्म स्वभावजम् । परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः । स्वकर्मनिरतः सिद्धिं यथा
विन्दति तच्छृणु ॥ ४५ ॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥ श्रेयान्स्वधर्मो
विगुणः परधर्मात्स्वनुष्ठितात् । स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बि-
षम् ॥ ४७ ॥ सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् । सर्वारम्भा हि
दोषेण धूमेनाग्निरिवावृताः ॥४८॥ असक्तबुद्धिः सर्वत्र जितात्मा विगत-
स्पृहः । नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥ सिद्धिं
प्राप्तो यथा ब्रह्म तथाऽप्नोति निबोध मे । समासेनैव कौन्तेय निष्ठा
ज्ञानस्य या परा ॥ ५० ॥ बुद्ध्या विशुद्धया युक्तो धृत्याऽत्मानं नियम्य
च । शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥५१॥ विविक्तसेवी



परा निष्ठा ॥ ब्रह्मभूयाय कल्पते । ब्रह्मणि भावो ब्रह्मभूयं । ब्रह्मणि स्थितिः । सर्वदा तन्मनस्कतेत्यर्थः ॥ पुनरन्तरङ्गसाधनान्युक्त्वोपसंहरति । सर्वकर्माणीत्यादिना ॥ परोक्षवचनं तु द्रोणं प्रति भीमवचनवत् ॥ धर्मत्यागः फलत्यागः । कथमन्यथा युद्धविधिः ? । ' यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयत' इति चोक्तम् ॥

---

लघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥
॥ ५२ ॥ अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः
शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥ ब्रह्मभूतः प्रसन्नात्मा न शोचति न
काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥ भक्त्या
मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते
तदनन्तरम् ॥ ५५ ॥ सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥ चेतसा सर्वकर्माणि
मयि संन्यस्य मत्परः । बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि । अथ चेत्त्वमहङ्कारान्न
श्रोष्यसि विनङ्क्ष्यसि ॥५८॥ यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥ स्वभावजेन
कौन्तेय निबद्धः स्वेन कर्मणा । कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि
तत् ॥ ६० ॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्व-
भूतानि यन्त्रारूढानि मायया ॥ ६१ ॥ तमेव शरणं गच्छ सर्वभावेन
भारत । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया । विमृश्यैतदशेषेण यथेच्छसि
तथा कुरु ॥ ६३ ॥ सर्वगुह्यतमं भूयः शृणु मे परमं वचः । इष्टोऽसि मे
दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥ मन्मना भव मद्भक्तो मद्याजी
मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्ष-
यिष्यामि मा शुचः ॥ ६६ ॥ इदं ते नातपस्काय नाभक्ताय कदाचन । न

पूर्णादोषमहाविष्णोर्गीतामाश्रित्य लेशतः । निरूपणं कृतं तेन प्रीयतां मे सदा विभुः ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये अष्टादशोऽध्यायः ॥ १८ ॥ गीताभाष्यं सम्पूर्णम् ॥ ॥

---

चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥ य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥ न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः। भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥ अध्येष्यते च य इमं धर्म्यं संवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥ श्रद्धावाननसूयश्च शृणुयादपि यो नरः। सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥ कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा । कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनञ्जय ॥ ७२ ॥ अर्जुन उवाच ॥ नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत । स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥ सञ्जय उवाच ॥ इत्यहं वासुदेवस्य पार्थस्य च महात्मनः। संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४॥ व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् । योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥ राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् । केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥ तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः। विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥ ॥ ७७ ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः। तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# श्री गीतातात्पर्यनिर्णयः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ हरिः ॐ ॥ समस्तगुणसम्पूर्णं सर्वदोषविवर्जितम् । नारायणं नमस्कृत्य गीतातात्पर्यमुच्यते ॥ 'शास्त्रेषु भारतं सारं तत्र नामसहस्रकं । वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा । न भारतसमं शास्त्रं कुत एवानयोः समम् । भारतं सर्ववेदाश्च तुलामारोपिताः पुरा । देवैर्ब्रह्मादिभिः सर्वैर्ऋषिभिश्च समन्वितैः । व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् । महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते । निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते । स्वयं नारायणो देवैर्ब्रह्मरुद्रेन्द्रपूर्वकैः । अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् । चकार पञ्चमं वेदं महाभारतसंज्ञितमि'ति ब्रह्माण्डे । तत्र साक्षादिन्द्रावतारमुत्तमाधिकारिणमात्मनः प्रियतममर्जुनं क्षत्रियाणां विशेषतोऽपि परमधर्मं नारायणद्विट्तदनुबन्धिनिग्रहं बन्धुस्नेहादधर्मत्वेनाशङ्क्य ततो निवृत्तप्रायं स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमो धर्मस्तद्विरुद्धः सर्वोऽप्यधर्मो भगवदधीनत्वात्सर्वस्येति बोधयति भगवान्नारायणः । सर्वं चैतदत्रैवावगम्यते । 'अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि । ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसी'त्यादिना युद्धस्य स्वधर्मत्वम् । 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः । सर्वगुह्यतमं भूयः शृणु मे परमं वचः । इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।

मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे। सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच'-इत्यादिना स्वधर्मेणैव भगवदाराधनस्यैव कर्तव्यत्वं तदन्यस्य त्याज्यत्वं च। 'नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा। भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे'त्यादिना विष्णुभक्तेरेव सर्वसाधनोत्तमत्वं परोक्षापरोक्षज्ञानयोर्ज्ञानिनोऽपि मोक्षस्य तदधीनत्वं च। 'मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः। निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवे'त्यादिना भक्तस्यापि तत्कर्म विकर्मत्यागश्च। 'कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतमि'त्यादिना ज्ञानिनोऽपि भगवत्कर्म। 'सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम। देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः। इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्। दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता। मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव। महात्मानस्तु मां पार्थ दैवी प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्। (दर्शयात्मानमव्ययं) दर्शयामास पार्थाय परमं रूपमैश्वरमि'त्यादिनाऽर्जुनस्योत्तमाधिकारित्वमपरोक्षज्ञानित्वं च। 'न मे विदुः सुरगणाः प्रभवं न महर्षयः। अहमादिर्हि देवानां महर्षीणां च सर्वशः। यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। असम्मूढः स मर्त्येषु सर्व-पापैः प्रमुच्यते। बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः। महर्षयः सप्त पूर्वे। एतां विभूतिं योगं च। अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः। तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयामि। तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति। ज्ञानं तेऽहं सविज्ञानमिदं



वक्ष्याम्यशेषतः। यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते। अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव। इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे। ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्य-सेऽशुभात्। राजविद्या राजगुह्यम्। मया ततमिदं सर्वं जगदव्यक्त-मूर्तिना। मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः। भूतभृन्न च भूतस्थः। न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः। परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्। मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्। सम्भवः सर्वभूतानां ततो भवति भारत। ब्रह्मणो हि प्रतिष्ठाऽहममृत-स्याव्ययस्य च। शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च। द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रय-माविश्य बिभर्त्यव्यय ईश्वरः। यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद्भजति मां सर्व-भावेन भारत। इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ। एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत। न मे पार्थाऽस्ति कर्तव्यं त्रिषु लोकेषु किञ्चन। नानवाप्तमवाप्तव्यमि'त्यादिना सर्वस्माद्भगवतो भेदः सर्वस्य तदधीनत्वं, तस्यानन्याधीनत्वं, सर्वोत्तमत्वं, सर्वगुणपूर्णत्वं, सर्वशास्त्राणां तत्परत्वं, तथा तज्ज्ञानादेव मोक्ष इत्यादि। 'अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता'। 'पश्यन्नपी-ममात्मानं कुर्यात्कर्माविचारयन्। यदात्मनः सुनियतमानन्दोत्कर्ष-माप्नुयात्। भक्त्या प्रसन्नः परमो दद्याज्ज्ञानमनाकुलम्। भक्तिं च भूयसीं ताभ्यां प्रसन्नो दर्शनं व्रजेत्। ततोऽपि भूयसीं भक्तिं दद्या-त्ताभ्यां विमोचयेत्। मुक्तोऽपि तद्वशो नित्यं भूयो भक्तिसमन्वितः।

साध्यानन्दस्वरूपैव भक्तिर्नैवात्र साधनम् । ब्रह्मरुद्ररमादिभ्योऽप्युत्तमत्वं स्वतन्त्रताम् । सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णताम् । निर्दोषत्वं च विज्ञाय विष्णोस्तत्राखिलाधिकः । स्नेहो भक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तमः । तेनैव मोक्षो नान्येन दृष्ट्यादिस्तस्य साधनम् । अधमाधिकारिणो मर्त्या मुक्तावृष्यादिकाः समाः । अधिकार्युत्तमा देवाः प्राणस्तत्रोत्तमोत्तमः । नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः । तिरोहितं तथाप्येते शृण्वन्ति क्रीडयाऽथवा । बहुवारतदभ्यासात्तिरोभावोऽपि नो भवेत् । यथा व्यासानुशिष्टानां देवानां क्षत्रजन्मनाम् । पार्थानामतिरोधानं ज्ञानं सुस्थिरतां गतम्' । 'अस्य देवस्य मीढुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विना वि रावत्' । 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः' । 'स मुनिर्भूत्वा समचिन्तयत्तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा' इति । 'एको नारायण आसीन्न ब्रह्मा नेशानः' । 'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः' । 'यं यं कामयते विष्णुस्तं ब्रह्माणं च शङ्करम् । शक्रं सूर्यं यमं स्कन्दं कुर्यात्कर्ताऽस्य न क्वचित्' । 'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् । अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततोऽत' इति पैङ्गिश्रुतिः । 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' । 'अनन्तगुणमाहात्म्यो निर्दोषो भगवान्हरिः । न समो वाऽधिको वाऽपि विद्यते तस्य कश्चन' । 'नासीन्न च भविष्यो वा परतः स्वत एव चे'त्यादि श्रुतेश्च । 'यस्त्वात्मरतिरेव स्यादि'त्यादि तु मुक्तविषयं । 'यस्त्वेवात्मरतो मुक्तः कार्यं तस्यैव नास्ति हि । तस्मात्कुर्वीत कर्माणीत्याह कृष्णोऽर्जुनं स्मयन्नि'ति च स्कान्दे । ज्ञानयोगेन साङ्ख्यानामित्यादि तु बाह्यकर्मसङ्कोचापेक्षया । 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।



शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः । एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्' । 'ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत । न सर्वकर्मणां त्यागः कस्यचिद्भवति क्वचित् । त्यागिनो यतयोऽपि स्युः सङ्कोचाद्बाह्यकर्मणामि'त्यादि । 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन'इत्यादि चोत्पन्नज्ञानतिरोभावनिवृत्त्यर्थम् ॥ (इत्युपोद्घातः)

प्रकर्षेण जानन्तीति प्रज्ञाः तद्वादः प्रज्ञावादः । प्राज्ञमतविरुद्धवादं वदसि । कथं ? । गतासून् ॥११॥ बन्धुस्नेहाद्धि त्वया स्वधर्मनिवृत्तिः क्रियते । तत्र देहनाशभयात्किं वा चेतननाशभयात् ? । देहस्य सर्वथा विनाशित्वान्न तत्र भये प्रयोजनम् । न च चेतननाशभयात् । तस्याविनाशित्वादेव । न तावत्परमचेतनस्य मम नाशोऽस्ति । एवमेव तवान्येषां च । 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानि'त्यादिश्रुतेः । 'स्वदेहयोगविगमौ नाम जन्ममृती पुरा । इष्येते ह्येव जीवस्य मुक्तेर्न तु हरेः क्वचिदि'ति स्कान्दे । ईश्वरस्यापि युद्धगतत्वान्मोहात्तस्याप्युभयविधानित्यत्वशङ्काप्राप्तौ तदपि निवार्यते । न त्वेवाहमिति । यद्यप्येषा शङ्काऽर्जुनस्य नास्ति तथापि प्राप्तलोकोपकारार्थं भगवता निवार्यते । एकान्ते कथयन्नपि व्यासरूपेण तदेव लोके प्रकाशयिष्यति हि ॥१२॥ मम स्वकीयदेहान्तरप्राप्तिरपि नास्तीति दर्शयितुं देहिन इति विशेषणं । भवदादीनां सा भविष्यतीत्यपि शोको न कर्तव्यः । देहस्येदानीमप्यन्यथात्वदर्शनात् ॥१३॥ तद्दर्शनादिनिमित्तं सोढव्यमित्याह । मात्रास्पर्शा इति । विषयसम्बन्धाः ॥ १४ ॥ फलमाह । यं हीति । न केवलमव्यथामात्रेणामृतत्वं किन्तु पुरुषम् । 'पुरु ब्रह्म गुणाधिक्यात्तज्ज्ञानात्पुरुषः स्मृत' इति प्रवृत्ते । पुरुसरणात्पुरुष इत्यर्थः ॥ १५ ॥ न च युद्धात्परलोकदुःखमिति शोकः ।

सेशा लोकास्तयोरिम' इत्यादि व्यासस्मृतौ ॥ ४२-४८ ॥ नैष्कर्म्य-
सिद्धिं अनिष्टसर्वकर्मनाशाख्यसिद्धिम् ॥ ४९ ॥ वक्ष्यमाणप्रकारेण
वर्तमानस्तदनन्तरं नैष्कर्म्यसिद्धिं प्राप्तो भूत्वा ब्रह्माख्याया महालक्ष्म्याः
सकाशं यथाऽऽप्नोति तथा निबोध। 'मम योनिर्महद्ब्रह्म।' 'ब्रह्मणो
हि प्रतिष्ठाऽहमि'त्युक्तत्वात् । 'ब्रह्मभूतः प्रसन्नात्मे'त्युक्त्वा'मद्भक्तिं
लभते परामि'ति वक्ष्यमाणत्वाच्च। 'सर्वपापक्षयाद्देहं त्यक्त्वा देवान्
क्रमाद्व्रजन्। प्राप्य लक्ष्मीं तत्प्रसादात्पुनः स्वृद्धा हरौ यदा। भक्ति-
स्तया पुनर्ज्ञाने स्वृद्धे विष्णुं प्रपद्यते। अपरोक्षदृशो विष्णोः शरीरेऽपि
सतः पुरा। त्यक्तदेहादिकस्यापि यावद्विष्णुं प्रपद्यते। तावद्गुणा
विवर्धन्ते स्थिताः स्युः प्राप्य केशवमि'ति महावाराहे ॥५०॥ विमुच्य
निर्ममः शान्तो नैष्कर्म्यसिद्धिं प्राप्तो भूत्वा ब्रह्मणि भूयाय भवतीत्यर्थः
॥ ५३ ॥ विहितानि सर्वकर्माण्यपि मद्यपाश्रयो भूत्वा सदा कुर्वाणः।
न हि यथेष्टचरणे तात्पर्यमत्र। तथासति विहितकरणेऽपि समत्वात्
'मामनुस्मर युध्य च। ततः स्वधर्मं कीर्तिं चे'त्यादिप्रस्तुतविरोधः।
अपिशब्दस्त्वेकमपि कर्मातदाश्रयेण न कार्यमित्यर्थे ॥ ५६ ॥ भगव-
त्संश्रितस्य त्रैविद्यस्य च मनसैव विशेष इत्याह। चेतसा सर्वकर्माणीति।
स एव सर्वस्मात्परम इति भावोऽस्येति मत्परः। तत्र चित्तवृत्तिनिरो-
धोऽपि। बुद्धियोगः प्रत्याहारादिः ॥ ५७ ॥ प्रकृतिरीश्वरेच्छा।
'प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त कथ्यत' इति वचनात्। एषा तु
प्रकृत्यैव च कर्माणीत्यादिष्वपि युज्यते। तस्या एव हि मुख्यतो
नियोक्तृत्वम्। स्वभावकर्मादिभिर्बद्धा। तदेवाह। ईश्वरः सर्वभूताना-
मिति ॥५९॥ 'निश्चितार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः। उच्यते
विष्णुना यद्वत्तद्ब्रह्मेत्यादि कथ्यत' इति शब्दनिर्णये। मन्मना इत्युप-
संहाराच्च ॥ ६१ ॥ शाश्वतं स्थानं वैकुण्ठादि। 'श्रीरेव लोकरूपेण
विष्णोस्तिष्ठति सर्वदा। अतो हि वैष्णवा लोका नित्यास्ते चेतना



अपी'त्याग्नेये। 'न वर्तते यत्र रजस्तमस्तयोः सत्वं चे'त्याद्युक्तम् ॥६२॥
तत्वसारकथनं द्वाविमौ पुरुषावित्यत्रैवोपसंहृतम्। तत्त्वप्रशंसार्थमेव
तद्बुद्धिप्रशंसा कृता। अत्र तु साधनसारोपसंहारः सर्वगुह्यतमामिति।
मन्मना इत्यादेः पूर्वमेवोक्तत्वाद्भूय इति। अर्थतस्त्वत्रापि विष्णवा-
धिक्यमेवोक्तं भवति ॥ ६४ ॥ अन्यसर्वधर्मान्परित्यज्येत्युक्तशेषत्वेन
सर्वधर्मानितिवचनम्। मामेकं शरणं व्रजेत्यपि। मन्मना इत्याद्युक्त-
निगमनात्मना तद्व्याख्यानम्। 'सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा।
सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम्। अखण्डा त्रिविधा पूजा तद्रत्यैव
स्वभावतः। रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः। शरणागति-
रेषा स्याद्विष्णौ मोक्षफलप्रदे'ति महाविष्णुपुराणे। अनादिजन्मकृत-
सर्वपापेभ्यः। अत्र प्राप्त्यभावात्। धर्मपरित्यागे पापपरित्यागस्य
कैमुत्येनैव सिद्धत्वात् ॥ ६६ ॥ अतपस्कायैव न वाच्यम्। अशुश्रूषवे
पुनश्चेति दोषाधिक्यमशुश्रूषोर्दर्शयितुं चशब्दः। एवमभक्ताय कदापि
न वाच्यम्। कदाचिदल्पतपसोऽल्पशुश्रूषोरपि भक्त्याधिक्ये वाच्यं
भवतीति कदाचनेतिशेषः। अभक्ताच्च न वाच्यमसूयोरिति तत्रापि
चशब्दः 'समुच्चये तथाधिक्ये न्यूनत्वे चः प्रयुज्यत' इति शब्दनिर्णये।
'अभक्तादपि पापः स्यादसूयुर्दोषदृग्यत' इति च पाद्मे ॥ ६७ ॥
सोऽपि मुक्तः। न च तस्मान्मनुष्येष्वित्युक्तेश्च मुक्तानां महत्तारतम्यं
ज्ञायते। मनुष्येष्विति विशेषणात्तत्रापि देवानामाधिक्यं च। 'मुक्ति-
र्ज्ञात्वाऽपि विष्णुं स्याच्छास्त्रं श्रुत्वा ततोऽधिकम्। मुक्तौ सुखं तत्पठत-
स्ततोऽप्यधिकमिष्यते। व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्य-
चित्। ततोऽधिकं तु देवानां मुख्यव्याख्याकृतो यत' इति च ॥
॥ ६७-७१ ॥ यथेच्छसि तथा कुर्वित्याक्षेपपरिहाराय करिष्ये वचनं
तवेत्यनुसरति भगवन्तम् ॥ ७३ ॥ ६ ॥ नमस्ते वासुदेवाय प्रेयसां
मे प्रियोत्तम। समस्तगुणसम्पूर्ण निर्दोषानन्ददायिने ॥ यस्य त्रीण्यु-

दितानि वेदवचने रूपाणि दिव्यान्यलं बद्वतद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् । वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ निःशेषदोषरहित कल्याणाशेषसद्गुण । भूतिस्वयम्भुशर्वादिवन्द्यं त्वां नौमि मे प्रियम्॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णयेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥ ॥ ॥

॥ श्रीमद्भगवद्गीतातात्पर्यनिर्णयः समाप्तः ॥

